श्रीगणेशायनमः॥ ॥अथकथा॥ ॥सूतउवाच॥ ॥ एवंप्रीत्यापुराविप्राः श्रीकृ-
ष्णेनपरंव्रतम् ॥ कथितंतत्प्रयत्नेनयःकुर्याद्भुविमानवः ॥१॥ भुक्त्वाभोगाननेे-
कांस्तुविष्णुलोकंप्रयातिसः॥ ॥पार्थउवाच॥ ॥उपवासस्यनक्तस्यतथैवायाचि-
तस्यभोः ॥ किंपुण्यंकिंविधानंचब्रूहिसर्वंजनार्दन ॥ २ ॥ ॥श्रीकृष्णउवाच॥
हेमंतेचैवसंप्राप्तेमासिमार्गशिरेशुभे॥ शुक्लपक्षेतथापार्थएकादश्यामुपोष्यच॥३
दशम्यांचैवयत्किंचित्प्रकुर्यात्सुदृढव्रतम् ॥ नक्तंचतद्दिनेकृत्वादशम्यांदंतधा-
वनम् ॥ ४ ॥ दिवसस्याष्टमेभागेमंदीभूतेदिवाकरे ॥ तत्रनक्तंविजानीयान्न
नक्तंनिशिभोजनम् ॥ ५ ॥ ततःप्रभातसमयेसंकल्प्यनियमांश्चरेत् ॥ मध्या-
ह्नेचतथापार्थशुचिःस्नातःसमाहितः ॥ ६ ॥ नद्यांतडागेवाप्यांवाउत्तमंमध्य-

मंत्वधः ॥ क्रमाज्ज्ञेयंतथाकूपेतदभावेप्रशस्यते ॥ ७ ॥ अश्वक्रांतेरथक्रांतेवि-
ष्णुक्रांतेवसुंधरे ॥ मृत्तिकेहरमेपापंयन्मयापूर्वसंचितम् ॥ ८ ॥ त्वयाहतेन
पापेनगच्छामिपरमांगतिम् ॥ अनेनमृत्तिकास्नानंविदध्यात्तुव्रतीनरः ॥ ९ ॥
नालपेत्पतितैश्चोरैस्तथापाखंडिभिःसह ॥ मिथ्यापवादिनोदेववेदब्राह्मण-
निंदकान् ॥ १० ॥ अन्यांश्चैवदुराचारानगम्यागामिनस्तथा ॥ परद्रव्याप-
हर्तृंश्चदेवद्रव्यापहारिणः ॥ ११ ॥ नसंभाषेतदृष्ट्वापिभास्करंचावलोकयेत् ॥
ततोगोविंदमभ्यर्च्यनैवेद्यादिभिरादरात् ॥ १२ ॥ दीपंदद्याद्गृहेचैवभक्तियुक्ते-
नचेतसा ॥ तद्दिनेवर्जयेत्पार्थनिंदांमैथुनमेवच ॥ गीतशास्त्रविनोदेनदिवारा-
त्रीनयेद्व्रती ॥ १३ ॥ रात्रौजागरणंकृत्वाभक्तियुक्तेनचेतसा ॥ विप्रेभ्योदक्षि-

णांदत्वाप्रणिपत्यक्षमापयेत् ॥ १४ ॥ यथाशुक्लातथाकृष्णामान्यावैधर्मेत-
त्परैः ॥ एकादश्योर्द्वयोराजन्विभेदंनैवकारयेत् ॥ १५ ॥ एवंहिकुरुतेयस्तु
शृणुतस्यापियत्फलम् ॥ शंखोद्धारे नरःस्नात्वादृष्ट्वादेवंगदाधरम् ॥ १६ ॥
एकादश्युपवासस्यकलांनार्हतिषोडशीम् ॥ व्यतीपातेचदानस्यलक्षमेकंफलं
स्मृतम् ॥ १७ ॥ संक्रांतिषुचतुर्लक्षंयोददातिधनंजय ॥ कुरुक्षेत्रेचयत्पुण्यं
ग्रहणेचंद्रसूर्ययोः ॥ १८ ॥ तत्सर्वंलभतेयस्तुएकादश्यामुपोषितः ॥ अश्वमे-
धस्ययज्ञस्यकरणाद्यत्फलंलभेत् ॥ ततःशतगुणंपुण्यमेकादश्युपवासतः ॥१९
तपस्विनोगृहेनित्यंलक्षंयस्यचभुंजते ॥ षष्टिवर्षसहस्राणितस्यपुण्यंचतद्भवे-
त् ॥ २० ॥ एकादश्युपवासेनपुण्यंप्राप्नोतिमानवः ॥ गोसहस्रेचयत्पुण्यंद-

त्तेवेदांगपारगे ॥ २१ ॥ तस्मात्पुण्यंदशगुणमेकादश्युपवासिनाम् ॥ नित्यं
चभुंजतेयस्यदशचैवद्विजोत्तमाः ॥ २२ ॥ भवेत्तद्वैदशगुणंभोजनेब्रह्मचारि-
णः ॥ एतत्सहस्रंभूदानेकन्यादानेततःस्मृतम् ॥ २३ ॥ तस्माद्दशगुणंप्रोक्तं
विद्यादानेतथैवच ॥ विद्यादशगुणंचान्नंयोददातिबुभुक्षिते ॥ २४ ॥ अन्न-
दानसमंदानंनभूतंनभविष्यति ॥ तृप्तिमायांतिकौंतेयस्वर्गस्थाः पितृदेव-
ताः ॥ २५ ॥ एकादश्याव्रतस्यापिपुण्यसंख्यानाविद्यते ॥ एतत्पुण्यप्रभावं
चयत्सुरैरपिदुर्लभम् ॥ २६ ॥ नक्तस्यार्धफलंतस्यएकभक्तस्यसत्तम ॥ एकभक्तंच
नक्तंचउपवासस्तथैवच ॥ २७ ॥ एतेष्वन्यतमंवापिव्रतंकुर्याद्धरेर्दिने ॥ ताव-
द्गर्जंतितीर्थानिदानानिनियमायमाः ॥ २८ ॥ एकादशीनसंप्राप्तायावत्ता-

वन्मखाअपि ॥ तस्मादेकादशीसर्वैरुपोष्याभवभीरुभिः ॥ २९ ॥ ननखेनापिबेत्तोयंनहन्यान्मत्स्यसूकरान् ॥ एकादश्यांनभुंजीतयन्मांत्वंपृच्छसेऽर्जुन ॥ ३० ॥ एतत्तेकथितंसर्वंव्रतानामुत्तमंव्रतम् ॥ एकादशीसमंनास्तिकृत्वायज्ञसहस्रकम् ॥ ३१ ॥ ॥ अर्जुनउवाच ॥ ॥ उक्तात्वयाकथंदेवपुण्येयंसर्वतस्तिथिः॥ ॥श्रीकृष्णउवाच॥ ॥ पुराकृतयुगेपार्थमरुनामाहिदानवः ॥ अत्यद्भुतमहारौद्रः सर्वदेवभयंकरः ॥ ३२ ॥ इंद्रोविनिर्जितस्तेनअत्युग्रेणचपांडव ॥ इंद्रेणकथितः सर्ववृत्तांतःशंकरायवै ॥ ३३ ॥ सर्वेलोकपरिभ्रष्टाविचरामोमहीतले ॥ उपायंब्रूहिमेदेवअमराणांतुकागतिः ॥ ३४ ॥ ॥ईश्वरउवाच ॥ ॥ देवराजसुरश्रेष्ठयत्रास्तिगरुडध्वजः ॥ शरण्यश्चजगन्नाथःप-

रित्राणपरायणः ॥ ३५ ॥ तत्रगच्छामहेसर्वेसनःकार्यविधास्यति ॥ ईशस्य वचनंश्रुत्वादेवराजोमहामनाः ॥ ३६ ॥ पुरस्कृत्यमहादेवंसगणंसमरुद्गणम्॥ यत्रदेवोजगन्नाथः प्रसुप्तोहिजनार्दनः ॥ ३७ ॥ जलमध्येप्रसुप्तंतुदृष्ट्वादेवं जगत्पतिम् ॥ कृतांजलिपुटोभूत्वारुद्रःस्तोत्रमुदैरयत् ॥ ३८ ॥ ओंनमोदेवदे-वायदेवदेवैः सुवंदित ॥ दैत्यारेपुंडरीकाक्षत्राहिनोमधुसूदन ॥ ३९ ॥ दैत्य-भीताइमेदेवामयासहसमागताः ॥ शरणंत्वांजगन्नाथत्वंकर्तात्वंचकारकः॥४०॥ ॥त्वंमातासर्वलोकानांत्वमेवजगतःपिता ॥ त्वंस्थितिस्त्वंतथोत्पत्तिस्त्वंचसं-हारकारकः ॥ ४१ ॥ सहायस्त्वंचदेवानांत्वंचशांतिकरःप्रभो ॥ त्वंधराचत्व-माकाशःसर्वविश्वोपकारकः ॥ ४२ ॥ भवस्त्वंचस्वयंब्रह्मात्रैलोक्यप्रतिपा-

लकः ॥ त्वंरविस्त्वंशशांकश्चत्वंचदेवोहुताशनः ॥ ४३ ॥ हव्यंहोमोहुतस्त्वं
चमंत्रतंत्रर्त्विजोजपः ॥ यजमानश्चयज्ञस्त्वंफलभोक्तात्वमीश्वरः ॥ ४४ ॥
नत्वयारहितंकिंचित्त्रैलोक्येसचराचरे ॥ भगवन्देवदेवेशशरणागतवत्सल ॥
४५ ॥ त्राहित्राहिमहायोगिन्भीतानांशरणंभव ॥ दानवैर्निर्जितादेवाःस्वर्ग-
भ्रष्टाःकृताविभो ॥ ४६ ॥ स्थानभ्रष्टाजगन्नाथविचरंतिमहीतले ॥ रुद्रस्य
वचनंश्रुत्वाविष्णुर्वचनमब्रवीत् ॥ ४७ ॥ ॥ श्रीभगवानुवाच ॥ ॥ कोऽसौ
दैत्योमहामायोदेवायेनविनिर्जिताः ॥ किंस्थानंतस्यकिंनामकिंबलंकस्तदा-
श्रयः ॥ ४८ ॥ एतत्सर्वंसमाचक्ष्वमघवन्निर्भयोभव ॥ ॥ इंद्रउवाच ॥
॥ भगवन्देवदेवेशभक्तानुग्रहकारक ॥ ४९ ॥ दैत्यः पूर्वंमहानासीन्नाडीजंघ-

इतिस्मृतः ॥ ब्रह्मवंशसमुद्भूतोमहोग्रःसुरसूदनः ॥५०॥ तस्यपुत्रोऽतिविख्या-
तोमरुनामामहाऽसुरः ॥ तस्यचंद्रवतीनामनगरीचगरीयसी ॥ ५१ ॥ त-
स्यांवसन्सदुष्टात्माविश्वंनिर्जित्यवीर्यवान् ॥ सुरान्स्ववशमानिन्येनिराकृत्य
त्रिविष्टपात् ॥ ५२ ॥ इंद्राग्नियमवाय्वीशसोमनिर्ऋतिपाशिनाम् ॥ पदेषु
स्वयमेवासीत्सूर्योभूत्वातपत्यपि ॥ ५३ ॥ पर्जन्यःस्वयमेवासीत्देवसर्वा-
श्चदेवताः ॥ जहितंदानवंविष्णोसुराणांजयमावह ॥ ५४ ॥ तस्यतद्वचनं
श्रुत्वाकोपाविष्टोजनार्दनः ॥ उवाचशक्रंदेवेंद्रहनिष्येतंमहाबलम् ॥ ५५ ॥
प्रयांतुसहिताःसर्वेचंद्रवत्यांमहाबलाः ॥ इत्युक्ताःप्रययुःसर्वेपुरस्कृत्यहरिंसुराः
॥ ५६ ॥ दृष्टोदेवैस्तुदैत्येंद्रोगर्जमानस्तुदानवैः ॥ असंख्यातसहस्रैस्तुदि-

व्यप्रहरणायुधैः ॥ ५७ ॥ हन्यमानास्तदादेवाअसुरैर्बाहुशालिभिः ॥ सं-
ग्रामंतेसमुत्सृज्यपलायंतादिशोदश ॥ ५८ ॥ ततोदृष्ट्वाहृषीकेशंसंग्रामेसमुप-
स्थितम् ॥ अन्वधावन्नभिक्रुद्धाविविधायुधपाणयः ॥ ५९ ॥ अथता-
न्प्रद्रुतान्दृष्ट्वाशंखचक्रगदाधरः ॥ विव्याधसर्वगात्रेषुशरैराशीविषोपमैः ॥
॥ ६० ॥ तेनाहतास्तेशतशोदानवानिधनंगताः ॥ एकांगोदानवः
स्थित्वायुध्यमानोमुहुर्मुहुः ॥ ६१ ॥ तस्योपरिहृषीकेशोयद्यदायुधमुत्सृ-
जत् ॥ पुष्पवत्तंसमभ्येतिकुंठितंतस्यतेजसा ॥ ६२ ॥ शस्त्रास्त्रैर्विध्यमानो
ऽपियदाजेतुंनशक्यते ॥ युयोधचतथाक्रुद्धोबाहुभिःपरिघोपमैः ॥ ६३ ॥ बाहु-
युद्धंकृतंतेनदिव्यवर्षसहस्रकम् ॥ तेनश्रांतःसभगवान्गतोबदरिकाश्रमम् ॥

६४ ॥ तत्रहैमवतीनाम्नीगुहापरमशोभना ॥ तांप्रविश्यमहायोगीशयनार्थं
जगत्पतिः ॥ ६५ ॥ योजनद्वादशायामाएकद्वाराधनंजय ॥ अहंतत्रप्रसु-
प्तोऽस्मिभयभीतोनसंशयः ॥ ६६ ॥ महायुद्धेनतेनैवश्रांतोहंपांडुनंदन ॥
दानवःपृष्ठतोलग्नःप्रविवेशसतांगुहाम् ॥ ६७ ॥ प्रसुप्तंमांतदादृष्ट्वाऽचिंतयद्दा-
नवोहृदि ॥ हरिमेनंहनिष्येऽहंदानवानांक्षयावहम् ॥ ६८ ॥ एवंसुदुर्मतेरस्य
व्यवसायंव्यवस्यतः ॥ समुद्भूताममांगेभ्यःकन्यैकाचमहाप्रभा ॥ ६९ ॥ दि-
व्यप्रहरणादेवीयुद्धायसमुपस्थिता ॥ ईक्षितादानवेंद्रेणमरुणापांडुनंदन॥७०॥
युद्धंसमाहितंतेनास्त्रियातत्रप्रयाचितम् ॥ तेनायुध्यतसानित्यंतांदृष्ट्वाविस्मयं
गतः ॥ ७१ ॥ केनेयंनिर्मितारौद्राअत्युग्राऽशनिपातिनी ॥ इत्युक्त्वादानवें-

द्रोऽसौयुयुधेकन्ययातया ॥ ७२ ॥ ततस्तयामहादेव्यात्वरयादानवोबली ॥
छित्त्वासर्वाणिशस्त्राणिक्षणेनविरथःकृतः ॥ ७३ ॥ बाहुप्रहरणोपेतोधावमा-
नोमहाबलात् ॥ तलेनाहत्यहृदयेतयादेव्यानिपातितः ॥ ७४ ॥ पुनरुत्थाय
सोधावत्कन्याहननकांक्षया ॥ दानवंपुनरायातंरोषेणाहत्यतच्छिरः ॥ ७५ ॥
क्षणान्निपातयामासभूमौतच्चसमुज्ज्वलत् ॥ दैत्यः कृत्तशिराः सोऽथययौवैव-
स्वतालयम् ॥ ७६ ॥ शेषाभयार्दितादीनाःपातालंविविशुर्द्विषः ॥ ततःसमु-
त्थितोदेवः पुरोदृष्ट्वाऽसुरंहतम् ॥ ७७ ॥ कन्यांपुरःस्थितांचापिकृतांजलिपुटां
नताम् ॥ विस्मयोत्फुल्लवदनः प्रोवाचजगतांपतिः ॥ ७८ ॥ केनायंनिहतः
प्रख्योदानवोदुष्टमानसः ॥ येनदेवाः सगंधर्वाः सेंद्राश्चसमरुद्गणाः ॥ ७९ ॥

सनागाःसहलोकेशालीलयैवविनिर्जिताः ॥ येनाहंनिर्जितोभूत्वाभीतःसुप्तो
गुहामिमां ॥ ८० ॥ केनकारुण्यभावेनराक्षसोऽयंपराजितः ॥ ॥ कन्यो-
वाच ॥ ॥ मयाविनिहतोदैत्यस्त्वदंशोद्भूतयाप्रभो ॥ ८१ ॥ दृष्ट्वासुप्तंह-
रेत्वांतुयतोहंतुंसमुत्थितः ॥ त्रैलोक्यकंटकस्येत्थंव्यवसायंप्रबुध्यच ॥ ८२ ॥
हतोमयादुरात्माऽसौदेवतानिर्भयाःकृताः ॥ ॥ श्रीभगवानुवाच ॥ ॥ निह-
तेदानवेंद्रेऽस्मिन्संतुष्टोऽहंत्वयाऽनघे ॥ ८३ ॥ हृष्टाःपुष्टाश्चवैदेवाआनंदःसम-
जायत ॥ आनंदस्त्रिषुलोकेषुदेवानांयस्त्वयाकृतः ॥ ८४ ॥ प्रसन्नोऽस्म्यन-
घेतुभ्यंवरंवरयसुव्रते ॥ ददामितन्नसंदेहोयत्सुरैरपिदुर्लभम् ॥ ॥ ८५ ॥
कन्योवाच ॥ ॥ यदितुष्टोऽसिमेदेवयदिदेयोवरोमम ॥ तारयेऽहंमहापापा-

दुपवासपरंनरम् ॥ ८६ ॥ उपवासस्ययत्पुण्यंतस्यार्धंनक्तभोजने ॥ तदर्धं
चभवेत्तस्यएकभक्तंकरोतियः ॥ ८७ ॥ यः करोतिव्रतंभक्त्यादिनेममजितें-
द्रियः ॥ सगत्वावैष्णवंस्थानंकल्पकोटिशतानिच ॥ ८८ ॥ भुंजानोविविधा-
न्भोगानुपवासीजितेंद्रियः ॥ भगवंस्त्वत्प्रसादेनभवत्वेषवरोमम ॥ ८९ ॥
उपवासंचनक्तंचएकभक्तंकरोतियः ॥ तस्यधर्मंचवित्तंचमोक्षंदेहिजनार्दन ॥
९० ॥ ॥श्रीभगवानुवाच॥ ॥ यत्त्वंवदसिकल्याणितत्सर्वंचभविष्यति ॥ मम
भक्ताश्चयेलोकास्तवभक्ताश्चतेनराः ॥९१॥त्रिषुलोकेषुविख्याताःप्राप्स्यंतिमम
संनिधिम् ॥ एकादश्यांसमुत्पन्नाममभक्तिपरायणा ॥९२॥ अतएकादशीत्येवं
तवनामभविष्यति॥दग्ध्वापापानिसर्वाणिदास्यामिपदमव्ययम्॥९३॥ तृतीया

चाष्टमीचैवनवमीचचतुर्दशी ॥ एकादशीविशेषेणतिथयोमेमहाप्रियाः ॥९४॥
सर्वतीर्थाधिकंपुण्यंसर्वदानाधिकंफलम् ॥ सर्वव्रताधिकंचैवसत्यंसत्यंवदामि
त ॥ ९५ ॥ एवंदत्वावरंतस्यास्तत्रैवांतरधीयत ॥ हृष्टातुष्टातुसाजातातदा
एकादशीतिथिः ॥ ९६ ॥ इमामेकादशींपार्थकरिष्यंतिनरास्तुये ॥ तेषांशत्रुं
हनिष्यामिदास्यामिपरमांगतिम् ॥ ९७ ॥ अन्येपियेकरिष्यंतिएकादश्या
महाव्रतम् ॥ हरामितेषांविघ्नांश्चसर्वसिद्धिंददामिच ॥९८॥ एवमुक्तासमुत्प-
त्तिरेकादश्याःपृथासुत ॥ इयमेकादशीनित्यासर्वपापक्षयंकरी ॥९९॥ एकैवच-
महापुण्यासर्वपापनिषूदनी ॥ उदितासर्वलोकेषुसर्वसिद्धिकरीतिथिः ॥१००॥
शुक्लावाप्यथवाकृष्णाइतिभेदंनकारयेत् ॥ कर्तव्येउभयेपार्थनतुल्याद्वादशी

तिथिः ॥ १ ॥अंतरंनैवकर्तव्यंसमस्तैर्व्रतकारिभिः॥तिथिरेकाभवेत्सर्वापक्षयो-
रुभयोरपि ॥ २ ॥ उपवासंप्रकुर्वंतिएकादश्यांनराश्चये ॥ तेयांतिपरमंस्थानं
यत्रास्तेगरुडध्वजः ॥ ३ ॥ धन्यास्तेमानवालोकेविष्णुभक्तिपरायणाः ॥ ए-
कादश्यास्तुमाहात्म्यंसर्वलोकेषुयःपठेत् ॥४॥ अश्वमेधस्ययत्पुण्यंतदाप्नोतिन
संशयः ॥ एकादश्यांनिराहारःस्थित्वाऽहंचपरेऽहनि ॥५॥ भोक्ष्यामिपुंडरीका-
क्षशरणंमेभवाच्युत ॥ इत्युच्चार्यततोविद्वान्पुष्पांजलिमथार्पयेत् ॥ ६ ॥
अष्टाक्षरेणमंत्रेणत्रिर्जप्तेनाभिमंत्रितम्॥उपवासफलप्रेप्सुःपिबेत्पात्रगतंजलम्।
७॥ दिवानिद्रापरान्नंचपुनर्भोजनमैथुने॥क्षौद्रंकांस्यामिषंतैलंद्वादश्यामष्टवर्जे-
येत् ॥ ८ ॥ असंभाष्यंहिसंभाष्यभक्षयेत्तुलसीदलम् ॥ आमलक्याःफलं

वापिपारणेभक्ष्यशुध्यति ॥ ९ ॥ आमध्याह्नाच्चराजेंद्रद्वादश्यामरुणोदये ॥
स्नानार्चनक्रियाःकार्यादानहोमादिसंयुताः ॥१०॥ संकटेविषमेप्राप्तेद्वादश्याः
पारणंकथम् ॥ अद्भिस्तुपारणंकुर्यात्पुनर्भुक्तंनदोषकृत् ॥११॥ यःशृणोतिदि-
वारात्रौनरोविष्णुपरायणः ॥ तद्भक्तमुखनिष्पन्नांकथांविष्णोःसुमंगलाम् ॥१२
कल्पकोटिसमायुक्तोविष्णुलोकेमहीयते ॥ एकादश्याश्चमाहात्म्यंपादमेकंशृ-
णोतियः ॥ १३ ॥ ब्रह्महत्यादिकंपापंनश्यतेनात्रसंशयः ॥ विष्णुधर्मसमंना-
स्तिव्रतंनामसनातनम् ॥ ११४ ॥ ॥ इतिश्रीभविष्योत्तरपुराणेश्रीकृ-
ष्णार्जुनसंवादेमार्गशीर्षकृष्णैकादशीमाहात्म्यंसंपूर्णम् ॥ ॥ ॥
॥ अथमार्गशीर्षशुक्लैकादशीकथा ॥ ॥ युधिष्ठिरउवाच ॥ ॥ वंदेविष्णुंप्रभुं

साक्षाल्लोकत्रयसुखप्रदम् ॥ विश्वेशंविश्वकर्तारंपुराणंपुरुषोत्तमम् ॥१॥ पृच्छा-
मिदेवदेवशसंशयोऽस्तिमहान्मम ॥ लोकानांतुहितार्थायपापानांचक्षयायच
॥ २ ॥ मार्गशीर्षेसितेपक्षेकिन्नामैकादशीभवेत् ॥ कीदृशश्चविधिस्तस्याःको
देवस्तत्रपूज्यते ॥ ३ ॥ एतदाचक्ष्वमेस्वामिन्विस्तरेणयथातथम् ॥ ॥
॥ श्रीकृष्णउवाच ॥ ॥ सम्यक्पृष्टंत्वयाराजन्साधुतेविपुलंयशः ॥ ४ ॥
कथयिष्यामिराजेंद्रहरिवासरमुत्तमम् ॥ उत्पन्नासासितेपक्षेद्वादशीममवल्ल-
भा ॥ ५ ॥ मार्गशीर्षेसमुत्पन्नाममदेहान्नराधिप ॥ सुरारीणांवधार्थायप्रख्या-
ताममवल्लभा ॥ ६ ॥ कथितासामयाचैवत्वदग्रेराजसत्तम ॥ पूर्वमेकादशी
राजन्त्रैलोक्येसचराचरे ॥ ७ ॥ मार्गशीर्षेऽसितेपक्षेचोत्पत्तिरितिनामतः ॥

अतःपरंप्रवक्ष्यामिमार्गशीर्षसितातथा ॥ ८ ॥ तस्याःश्रवणमात्रेणवाजपेय-
फलंभवेत् ॥ मोक्षानाम्नीतिविख्यातासर्वपापहरापरा ॥ ९ ॥ देवंदामोदरंत-
स्यांपूजयेच्चप्रयत्नतः ॥ तत्रापिपूजनंचैवनृत्यगीतैःसुमंगलैः ॥ १० ॥ शृ-
णुराजेंद्रवक्ष्यामिकथांपौराणिकींशुभाम् ॥ अधोगतिंगतायेवैपितृमातृसुताद-
यः ॥ ११ ॥ अस्याः पुण्यप्रभावेणस्वर्गंयांतिनसंशयः ॥ एतस्मात्कारणा-
द्राजन्महिमानंशृणुष्वतत् ॥ १२ ॥ पुरावैनगरेरम्येगोकुलेन्यवसन्नृपः ॥ वै-
खानसेतिराजर्षिःपुत्रवत्पालयन्प्रजाः ॥ १३ ॥ द्विजाश्चन्यवसंस्तत्रचतुर्वेद-
परायणाः ॥ एवंसराज्यंकुर्वाणोरात्रौतुस्वप्नमध्यतः ॥ १४ ॥ ददर्शजनकं
स्वंतुअधोयोनिंगतंनृपः ॥ एवंदृष्ट्वातुतंतत्रविस्मयोत्फुल्ललोचनः ॥ १५ ॥

कथयामासवृत्तांतंद्विजाग्रेस्वप्नसंभवम् ॥ ॥ राजोवाच ॥ ॥ मयातुस्वपि-
ताहृष्टोनरकेपतितोद्विजाः ॥ तारयस्वेतिमांतातअधोयोनिगतंसुत ॥ १६ ॥
इतिब्रुवाणःसतदामयादृष्टःपितास्वयम् ॥ तदाप्रभृतिभोविप्रानाहंशर्मलभाम्य-
हो ॥१७॥ एतद्राज्यंममममहदसह्यमसुखंतथा ॥ अश्वागजारथाश्चैवनमेरोचं-
तिसर्वथा ॥ १८ ॥ नकोशोपिसुखायेतिनाकिंचित्सुखदंमम ॥ नदारानसुता
मह्यंरोचंतेद्विजसत्तमाः ॥ १९ ॥ किंकरोमिक्वगच्छामिशरीरंमेतुदह्यते ॥ दा-
नंव्रतंतपोयोगोयेनैवममपूर्वजाः ॥ २० मोक्षमायांतिविप्रेंद्रास्तदेवकथयंतुमे॥
किंतेनजीवतालोकेसुपुत्रेणबलीयसा॥२१॥ पितातुयस्यनरकेतस्यजन्मानिरर्थ-
कम्॥ ब्राह्मणाऊचुः ॥ पर्वतस्यमुनेरत्रआश्रमोनिकटेनृप ॥२२॥ गम्यतांरा-

जशार्दूलभूतंभव्यंविजानतः ॥ तेषांश्रुत्वाततोवाक्यंवैखानोराजसत्तमः ॥२३
जगामतत्रयत्रासावाश्रमेपर्वतोमुनिः ॥ ब्राह्मणैर्वेष्टितःशांतैःप्रजाभिश्चसमं
ततः ॥ २४ ॥ आश्रमोविपुलस्तस्यमुनिभिःसंनिषेवितः॥ऋग्वेदिभिर्याजुषैश्च
सामाथर्वणकोविदैः ॥ २५ ॥ वेष्टितोमुनिभिस्तत्रद्वितीयइवपद्मजः॥ दृष्ट्वातंमु-
निशार्दूलंराजावैखानसस्तदा ॥ २६ ॥ जगामचावनिंमूर्ध्नादंडवत्प्रणनामच
॥ पप्रच्छकुशलंतस्यसप्तस्वंगेष्वसौमुनिः ॥ २७ ॥ राज्येनिष्कंटकत्वंचरा-
ज्यंसौख्यसमन्वितम् ॥ ॥ राजोवाच ॥ ॥ प्रसादात्कुशलंविप्रअंगेषुममस-
प्तसु ॥ २८ ॥ विभवेष्वनुकूलेषुकश्चिद्विघ्नउपस्थितः ॥ एतंमेसंशयंब्रह्मन्प्र-
ष्टुंत्वांचसमागतः ॥ २९ ॥ एवंश्रुत्वानृपवचःपर्वतोमुनिसत्तमः ॥ ध्यानस्ति-

मितनेत्राऽसौभूतंभव्यंविचिंतयन् ॥ ३० ॥ मुहूर्तमेकंध्यात्वाचप्रत्युवाचनृपोत्त-
मम् ॥ मुनिरुवाच ॥ जानेऽहंतवराजेंद्रपितुःपापंविकर्मणः ॥३१ ॥ पूर्वजन्मनि
तेपित्रासपत्नीकृतद्वेषतः ॥ कामासक्तेनचैकस्यऋतुभंगःकृतःस्त्रियाः ॥ ३२ ॥
त्राहिदेहीतिजल्पंत्याऋतुदानंनराधिप ॥ तेनवैतवपित्रातुनदत्तऋतुराग्र-
हात् ॥ ३३ ॥ कर्मणातेनसततंनरकेपतितोह्ययं ॥ ॥ राजोवाच ॥ ॥ के-
नवैव्रतदानेनमोक्षस्तस्यभवेन्मुने ॥ ३४ ॥ निरयात्पापसंयुक्तात्तन्ममा-
चक्ष्वपृच्छतः ॥ ॥मुनिरुवाच॥ ॥मार्गशीर्षेसितेपक्षेमोक्षानाम्नीहरेस्तिथिः
॥ ३५ ॥ सर्वैस्तुतद्व्रतंकृत्वापित्रेपुण्यंप्रदीयताम् ॥ तस्याः पुण्यप्रभावेणमो-
क्षस्तस्यभविष्यति ॥३६॥ मुनेर्वाक्यंततःश्रुत्वानृपःस्वगृहमागतः ॥ आग्रहा-

यणिकीकृच्छ्रात्प्राप्तोभरतसत्तम ॥३७॥ अंतःपुरचरैःसर्वैःपुत्रदारैस्तथानृपः ॥
व्रतंकृत्वाविधानेनपुण्यंदत्वानृपायतत् ॥ ३८ ॥ तस्मिन्दत्तेतदापुण्येपुष्पवृष्टि-
रभूद्दिवः ॥ वैखानसपितातेनगतःस्वर्गंस्तुतोगणैः ॥ ३९ ॥ राजानमंतरि-
क्षाच्चशुद्धांगिरमभाषत ॥ स्वस्त्यस्तुतेपुत्रसदेत्युक्त्वासत्रिदिवंगतः॥ ४० ॥
एवंयःकुरुतेराजन्मोक्षामेकादशीमिमाम् ॥ तस्यपापंक्षयंयातिमृतोमोक्ष-
मवाप्नुयात् ॥ ४१ ॥ नान्यापरतराकाचिन्मोक्षदाविमलाशुभा ॥ पुण्यसं-
ख्यांतुराजेंद्रनजानेऽहंतुयैःकृता ॥ ४२ ॥ चिंतामणिसमाह्येषास्वर्गमोक्ष-
प्रदायिनी ॥ ४३ ॥ ॥ इतिश्रीब्रह्मांडपुराणेमार्गशीर्षशुक्लैकादश्यामोक्षा-
नाम्न्यामाहात्म्यंसमाप्तम् ॥ ॥ ३ ॥ ॥ अथपौषकृष्णैकादशीकथा ॥ ॥

॥ युधिष्ठिरउवाच ॥ ॥ पौषस्यकृष्णपक्षेतुद्वादशीयाभवेत्प्रभो ॥ किंनाम
कोविधिस्तस्याःकोदेवस्तत्रपूज्यते ॥ १ ॥ एतदाचक्ष्वमेस्वामिन्विस्तरेण
जनार्दन ॥ ॥ श्रीकृष्णउवाच ॥ ॥ कथयिष्यामिराजेंद्रभवतःस्नेहकारणात्
॥ २ ॥ तथातुष्टिर्नमेराजन्क्रतुभिश्चाप्तदक्षिणैः ॥ यथातुष्टिर्भवेन्मह्यमेकाद-
श्याव्रतेनवै ॥ ३ ॥ तस्मात्सर्वप्रयत्नेनकर्तव्योहरिवासरः ॥ पौषस्यकृष्ण-
पक्षेतुद्वादशीयाभवेन्नृप ॥ ४ ॥ तस्याश्चैवचमाहात्म्यंशृणुष्वैकाग्रमानसः ॥
गदितायाश्चैवराजन्नेकादश्योभवंतिहि ॥ ५ ॥ तासामपिहिसर्वासांविकल्पं
नैवकारयेत् ॥ तथापिह्येकादश्याश्चशृणुराजन्कथानकम् ॥ ६ ॥ अतःपरंप्र-
वक्ष्यामिपौषस्यैकादशींतव ॥ लोकानांचहितार्थायकथयिष्येविधिंतव ॥ ७ ॥

पौषस्यकृष्णपक्षयासफलानामनामतः ॥ नारायणोऽधिदेवोऽस्याःपूजयेत्तंप्रय-
त्नतः ॥ ८ ॥ पूर्वेणविधिनाराजन्कर्तव्यैकादशीजनैः ॥ नागानांचयथाशेषः
पक्षिणांगरुडोयथा ॥ ९ ॥ यथाऽश्वमेधोयज्ञानांनदीनांजाह्नवीयथा ॥
व्रतानांचतथाराजन्प्रवरैकादशीतिथिः ॥ १० ॥ तेजनाभरतश्रेष्ठममपू-
ज्याश्चसर्वशः ॥ हरिवासरसंयुक्तावर्ततेयेजनाभृशम् ॥ ११ ॥ सफलानाम
साप्रोक्तातस्याःपूजाविधिंशृणु ॥ फलैर्मांपूजयेत्तत्रकालदेशोद्भवैःशुभैः ॥ १२
नारिकेलफलैःशुद्धैस्तथावैबीजपूरकैः ॥ जंबीरैर्दाडिमैश्चैवतथापूगीफलैरपि ॥
॥ १३ ॥ लवंगैर्विविधैश्चान्यैस्तथाचाम्रफलादिभिः ॥ पूजयेद्देवदेवेशंधूपै-
र्दीपैर्यथाक्रमम् ॥ १४ ॥ सफलायांदीपदानंविशेषेणप्रकीर्तितम् ॥ रा-

त्रौज्जागरणंतत्रप्रकर्तव्यंप्रयत्नतः ॥ १५ ॥ यावदुन्मीलयेन्नेत्रंतावज्जागर्तियोनिशि ॥ एकाग्रमानसोभूत्वातस्यपुण्यंशृणुष्वतत् ॥ १६ ॥ तत्समोनास्तिवैयज्ञस्तीर्थंतत्सदृशंनहि ॥ तत्समंनव्रतंकिंचिदिहलोकेनराधिप ॥१७॥ पंचवर्षसहस्राणितपस्तप्त्वाचयत्फलम् ॥ तत्फलंसमवाप्नोतिसफलायाव्रतेनवै ॥ १८ ॥ श्रूयतांराजशार्दूलसफलायाःकथानकम् ॥ चंपावतीतिविख्यातापुरीमाहिष्मतस्यच ॥ १९ ॥ माहिष्मतस्यराजर्षेश्चत्वारश्चाभवन्सुताः ॥ तेषांमध्येतुयोज्येष्ठःसमहापापसंयुतः ॥ २० ॥ परदाराभिगामीचवेश्यासंगरतःसदा ॥ पितुर्द्रव्यंसपापिष्ठोगमयामाससर्वशः ॥ २१ ॥ असद्वृत्तिरतो नित्यंदेवताद्विजनिंदकः ॥ वैष्णवानांचदेवानांनित्यंनिंदारतःसवै ॥ २२ ॥

ईदृग्विधंतदादृष्ट्वापुत्रंमाहिष्मतोनृपः ॥ लुंपकोनामनाम्नेतिकृतवानत्यम-
र्षितः ॥ २३ ॥ राज्यान्निष्काशितस्तेनापित्राचैवापिबंधुभिः ॥ परिवारजनैःस-
र्वैस्त्यक्तोराज्ञोभयादिति ॥ २४ ॥ लुंपकोपितदात्यक्तश्चिंतयामासह्येकलः ॥
मयाऽत्रकिंप्रकर्तव्यंत्यक्तःपित्राचबांधवैः ॥ २५ ॥ इतिचिंतापरोभूत्वामातिंपा-
पेतदाऽकरोत्॥ मयातुगमनंकार्यंवनेत्यक्त्वापुरंपितुः॥ २६ ॥ तस्माद्वनात्पि-
तुःसर्वंव्यापयिष्येपुरंनिशि ॥ ॥दिवावनेचरिष्यामिरात्रावपिपितुःपुरं ॥२७॥
इत्येवंसमतिंकृत्वालुंपकोदैवपातितः ॥ निर्जगामपुरात्तस्माद्गतोऽसौगहनंव-
नम् ॥ २८ ॥ जीवघातकरोनित्यंनित्यंस्तेयपरायणः ॥ सर्वंचनगरंतेनमुषि-
तंपापकर्मणा ॥ २९ ॥ गृहीतश्चपरित्यक्तोराज्ञोमाहिष्मताद्भयात् ॥ जन्मां-

तरीयपापेनराज्यभ्रष्टःसपापकृत् ॥ ३० ॥ आमिषाभिरतोनित्यंनित्यंवैफल-
भक्षकः ॥ आश्रमस्तस्यदुष्टस्यवासुदेवस्यसंमतः ॥ ३१ ॥ अश्वत्थोवर्ततेत-
त्रजीर्णोबहुलवार्षिकः ॥ देवत्वंतस्यवृक्षस्यवर्ततेतद्वनेमहत् ॥३२॥ तत्रैवनि-
वसंश्चासौलुंपकःपापबुद्धिमान् ॥ एवंकालक्रमेणैववसतस्तस्यपापिनः॥ ३३ ॥
दुष्कर्मनिरतस्यास्यकुर्वतःकर्ममंगलम् ॥ पौषस्यकृष्णपक्षेतुपूर्वाह्नेसफलादिने
॥ ३४ ॥ दशमीदिवसेराजन्निशायांशीतपीडितः ॥ लुंपकोवस्त्रहीनोवैनिश्चे-
ष्टोह्यभवत्तदा ॥ ३५ ॥ पीड्यमानस्तुशीतेनाश्वत्थस्यचसमीपतः॥ ननिद्रान
सुखंतस्यगतप्राणइवाभवत्॥३६॥पीडयन्दशनैर्दंतानेवंचगमितानिशा॥भानू-
दयेऽपितस्याथनसंज्ञासमजायत ॥ ३७ ॥ लुंपकोगतसंज्ञस्तुसफलादिवसेत-

दा ॥ मध्याह्नसमयेप्राप्तेसंज्ञांलेभेसलुंपकः ॥३८॥ प्राप्तसंज्ञोमुहूर्तेनचोत्थि-
तोऽसौतदासनात् ॥ प्रस्खलंश्चपदन्यासैःपंगुवच्चलितोमुहुः ॥ ३९ ॥ वनम-
ध्येगतस्तत्रक्षुत्तृषापीडितोऽभवत्॥नशक्तिर्जीवघातेऽस्यलुंपकस्यदुरात्मनः४०
फलानिभूमौपतितान्याजहारसलुंपकः ॥ यावत्सचागतस्तत्रतावदस्तमगाद्र-
विः ॥ ४१ ॥ किंभविष्यतितातेतिविललापातिदुःखितः॥ फलानितानिसर्वाणि
वृक्षमूलेन्यवेदयत् ॥ ४२ ॥ प्रत्युवाचफलैरेभिःप्रीयतांभगवान्हरिः ॥ उपवि-
ष्टोलुंपकश्चनिद्रांलेभेनवैनिशि ॥ ४३ ॥ तेनजागरणंजातंभगवान्मधुसूदनः ॥
फलानांपूजनंमेनेसफलायास्तथाव्रतम् ॥ ४४ ॥ कृतमेवंलुंपकेनह्यकस्माद्व्रत-
मुत्तमम् ॥ तेनव्रतप्रभावेणप्राप्तंराज्यमकंटकम् ॥४५॥ पुण्यांकुरोदयाद्राजन्

यथाप्राप्तंतथाशृणु ॥ रवेरुदयवेलायांदिव्योऽश्वश्चाजगामह ॥ ४६ ॥ दिव्य-
वस्तुपरीवारोलुंपकस्यसमीपतः ॥ तस्थौसतुरगोराजन्वागुवाचाऽशरीरिणी
॥ ४७ ॥ प्राप्नुहित्वंनृपसुतस्वराज्यंहतकंटकम् ॥ वासुदेवप्रसादेनसफलायाः
प्रभावतः ॥ ४८ ॥ पितुःसमीपंगच्छत्वंभुंक्ष्वराज्यमकंटकम् ॥ तथेत्युक्त्वा
त्वसौतत्रदिव्यरूपधरोऽभवत् ॥ ४९ कृष्णेमतिश्चतस्यासीत्परमावैष्णवीत-
था ॥ दिव्याभरणशोभाढ्यस्तातंनत्वास्थितोगृहे ॥ ५० ॥ वैष्णवायततोदत्तं
पित्राराज्यमकंटकम् ॥ कृतंराज्यंतुतेनैववर्षाणिसुबहून्यपि ॥५१॥ हरिवासर-
संलीनोविष्णुभक्तिरतःसदा ॥ मनोज्ञास्तस्यपुत्राःस्युर्दाराःकृष्णप्रसादतः ॥
॥ ५२ ॥ ततःसवार्धकेप्राप्तेराज्येपुत्रंनिवेश्यच ॥ वनंगतःसंयतात्माविष्णुभ-

क्तिपरायणः ॥ ५३ ॥ साधयित्वातथाऽत्मानंविष्णुलोकंजगामह ॥ गतःकृ-
ष्णस्यसान्निध्येयत्रगत्वानशोचति ॥ ५४ ॥ एवंयेवैप्रकुर्वंतिसफलैकादशीव्र-
तम् ॥ इहलोकेयशःप्राप्यमोक्षंयास्यंत्यसंशयं ॥ ५५ ॥ धन्यास्तेमानवालोके
सफलाव्रतकारिणः ॥ तस्मिन्जन्मनितेमोक्षंलभंतेनात्रसंशयः ॥ ५६ ॥ स-
फलायाश्चमाहात्म्यश्रवणाद्विविशांपते ॥राजसूयफलंप्राप्यवसेत्स्वर्गेचमानवः
॥ ५७ ॥ ॥ इतिश्रीपौषकृष्णए० सफलानाम्न्यामा० संपूर्णम् ॥ ॥ अथपौ-
षशुक्लैकादशीकथा ॥ ॥ युधिष्ठिरउवाच ॥ ॥ कथितावैत्वयाकृष्णसफलैकादशी
शुभा॥कथयस्वप्रसादेनशुक्लापौषस्ययाभवेत्॥१॥किंनामकोविधिस्तस्याःकोदे-
वस्तत्रपूज्यते ॥ कस्मैतुष्टोहृषीकेशस्त्वमेवपुरुषोत्तमः ॥२॥ श्रीकृष्णउवाच ॥

॥ शृणुराजन्प्रवक्ष्यामिशुक्लापौषस्ययाभवेत् ॥ तस्याविधिंमहाराजलोका-
नांचहितायवै ॥ ३ ॥ पूर्वेणविधिनाराजन्कर्तव्यैषाप्रयत्नतः ॥ पुत्रदेतिच
नाम्नाऽसौसर्वपापहरापरा ॥ नारायणोऽधिदेवोऽस्याःकामदःसिद्धिदायकः ॥
॥ ४ ॥ नातःपरतराकाचित्त्रैलोक्येसचराचरे ॥ विद्यावंतंयशस्वंतंकरोतिचन-
रंहरिः ॥ ५ ॥ शृणुराजन्प्रवक्ष्यामिकथांपापहरांपराम् ॥ पुरीभद्रावतीना-
म्नीराजातत्रसुकेतुमान् ॥ ६ ॥ तस्यराज्ञोऽथराज्ञीचशैब्यानाम्नीतिवि-
श्रुता ॥ पुत्रहीनेनराज्ञाचकालोनीतोमनोरथैः ॥ ७ ॥ नैवात्मजंनृपोलेभेवं-
शकर्तारमेवच ॥ तेनैवराज्ञाधर्मेणचिंतितंबहुकालतः ॥ ८ ॥ किंकरोमिक्वग-
च्छामिसुतप्राप्तिःकथंभवेत् ॥ नराष्ट्रेनपुरेसौख्यंलेभेराजासुकेतुमान् ॥ शै-

ऽव्ययाकांतयासार्धंप्रत्यहंदुःखितोऽभवत् ॥ ९ ॥ तावुभौदंपतीनित्यंचिंताशो-
कपरायणौ ॥ पितरस्तुजलंदत्तंकवोष्णमुपभुंजते ॥ १० ॥ राज्ञःपश्चान्नप-
ऽयामोयोऽस्मान्संतर्पयिष्यति ॥ इत्येवंसंस्मरंतोऽस्यपितरोदुःखिनोऽभवन् ॥
तेषांतद्दुःखमूलंचज्ञात्वाराजाप्यतप्यत ॥ ११ ॥ नबांधवानमित्राणिनामा-
त्याःसुहृदस्तथा ॥ रोचंतेतेऽस्यभूपस्यनगजाश्वपदातयः ॥ १२ ॥ नैराश्यं
भूपतेस्तस्यमनस्येवमजायत ॥ नरस्यपुत्रहीनस्यनास्तिवैजन्मनःफलम् ॥
॥ १३ ॥ अपुत्रस्यगृहंशून्यंहृदयंदुःखितंसदा ॥ पितृदेवमनुष्याणांनानृण-
त्वंसुतंविना ॥ १४ ॥ तस्मात्सर्वप्रयत्नेनसुतमुत्पादयेन्नरः ॥ इहलोकेयश-
स्तेषांपरलोकेशुभागतिः ॥ १५ ॥ येषांतुकर्मकर्तॄणांपुण्यंजन्मशतोद्भवम् ॥

आयुरारोग्यसंपत्तिस्तेषांगेहेप्रवर्तते ॥ १६ ॥ पुत्राःपौत्राश्चलोकाश्चभवेयुः पुण्यकर्मणाम् ॥ पुण्यंविनानचप्राप्तिर्विष्णुभक्तिंविनातथा ॥ १७ ॥ पुत्राणांसंपदोवापिविद्यायाश्चेतिमेमतिः ॥ एवंचिंतयमानोऽसौराजाशर्मनलब्धवान् ॥ ॥ १८ ॥ प्रत्यूषेऽचिंतयद्राजानिशीथेऽचिंतयत्तथा ॥ ततश्चात्मविनाशंवैविचार्यथसुकेतुमान् ॥ १९ ॥आत्मपातेदुर्गतिंचचिंतयित्वातदानृपः ॥ दृष्ट्वात्मदेहंप्रक्षीणमपुत्रत्वंतथैवच ॥ २० ॥ पुनर्विचार्यात्मबुद्ध्याह्यात्मनोहितकारणम् ॥अश्वारूढस्ततोराजाजगामगहनंवनम् २१ ॥ पुरोहितादयःसर्वेनजानंतिगतंनृपम् ॥ गंभीरेविपिनेराजामृगपक्षिनिषेविते ॥ २२ ॥ विचचारतदा तस्मिन्वनवृक्षान्विलोकयन् ॥ वटानश्वत्थबिल्वांश्चखर्जूरान्पनसांस्तथा ॥

॥ २३ ॥ बकुलांश्चसदापर्णान्तिंदुकांस्तिलकानपि ॥ शालांस्तालांस्तमा-
लांश्चददर्शसरलान्नृपः ॥ २४ ॥ इंगुदीककुभांश्चैवश्लेष्मातकबिभीतकान् ॥
शल्लकीकरमर्दांश्चपाटलान्खदिरानपि ॥ २५ ॥ शाकांश्चैवपलाशांश्चशोभि-
तान्ददृशेनृपः ॥ मृगव्याघ्रवराहांश्चसिंहान्शाखामृगानपि ॥ २६ ॥ ददर्श
भुजगान्राजावल्मीकादभिनिःसृतान् ॥ तथावनगजान्मत्तान्कलभैःसहसं-
गतान् ॥ २७ ॥ गवयान्कृष्णसारांश्चसृगालान्शशकानपि ॥ वनमार्जार-
कान्क्रूरान्शल्लकांश्चमरानपि ॥ २८ ॥ यूथपांश्चचतुर्दंतान्करिणीगणमध्य-
गान् ॥ तान्दृष्ट्वाचिंतयामासह्यात्मनःसगजान्नृपः ॥ २९ ॥ तेषांसविचरन्म-
ध्येराजाशोकमवापह ॥ महदाश्चर्यसंयुक्तंददर्शविपिनंनृपः ॥ ३० ॥ क्वचि-

च्छिवारुतंशृण्वन्नुलूकविरुतंतथा ॥ तांस्तान्पक्षिगणान्पश्यन्बभ्रामवनमध्य-
गः ॥३१॥ एवंददर्शगहनंनृपोमध्यंगतेरवौ ॥ क्षुत्तृड्भ्यांपीडितोराजाइतश्चेत-
श्चधावति ॥ ३२ ॥ चिंतयामासनृपतिःसंशुष्कगलकंधरः ॥ मयातुकिंकृतं
कर्मप्राप्तंदुःखंयदीदृशम् ॥ ३३ ॥ मयावैतोषितादेवायज्ञैःपूजाभिरेवच ॥ तथै-
वब्राह्मणादानैस्तोषितामिष्टभोजनैः ॥ ३४ ॥ प्रजाश्चैवयथाकालंपुत्रवत्परिपा-
लिताः ॥ कस्माद्दुःखंमयाप्राप्तमीदृशंदारुणंमहत् ॥ ३५ ॥ इतिचिंतापरोरा-
जाजगामाथाग्रतोवनम् ॥ सुकृतस्यप्रभावेणसरोदृष्टंमनोरमम् ॥ ३६ ॥ मा-
नसंस्पर्धमानंचपद्मिनीपरिशोभितं ॥कारंडवैश्चक्रवाकैराजहंसैश्चनादितम् ॥
३७ ॥ मकरैर्बहुभिर्युक्तमन्यैर्जलचरैर्युतम् ॥ समीपेसरसस्तत्रमुनीनामाश्र-

मान्बहून् ॥ ३८ ॥ ददर्शराजालक्ष्मीवान्निमित्तैःशुभशंसिभिः ॥ सव्यात्परतरं
चक्षुःप्रास्फुरच्चतथाकरः॥ ३९ ॥ स्फुरितैस्तस्यराज्ञश्चशंसितंशुभलक्षणम् ॥
तस्यतीरेमुनीन्दृष्ट्वाकुर्वाणान्नैगमंनृपः ॥ ४० ॥ अवतीर्यहयात्तस्मान्मुनी-
नामग्रतःस्थितः ॥ पृथक्पृथग्ववंदेसमुनींस्तान्शंसितव्रतान् ॥ ४१ ॥ कृ-
तांजलिपुटोभूत्वादंडवच्चप्रणम्यसः ॥ हर्षेणमहताविष्टोबभूवनृपसत्तमः॥४२
॥ तमूचुस्तेपिमुनयःप्रसन्नास्मोवयंतव ॥ कथयस्वाद्यवैराजन्यत्तेमनासिव-
र्तते ॥ ४३ ॥ ॥ राजोवाच ॥ ॥ केयूयमुग्रतपसःकिमाख्याभवतामपि ॥
किमर्थमागतायूयंवदंतुममतत्त्वतः ॥४४॥ ॥ मुनयऊचुः ॥ ॥विश्वेदेवावयंरा-
जन्स्नानार्थमिहचागताः ॥ माघोनिकटमायातएतस्मात्पंचमेऽहनि ॥ ४५ ॥

अद्यह्येकादशीराजन्पुत्रदानामनामतः॥पुत्रंददात्यसौशुक्लापुत्रदापुत्रमिच्छता-
म् ॥ ४६ ॥ ॥राजोवाच॥ ॥ एषवैसंशयोमह्यंसुतस्योत्पादनेमहान् ॥ यदि
तुष्टाभवंतोमेपुत्रोवैदीयतांतदा ॥ ४७ ॥ ॥मुनयऊचुः॥ ॥ अस्मिन्नेव
दिनेराजन्पुत्रदानामवर्तते ॥ एकादशीतिविख्याताक्रियतांव्रतमुत्तमं ॥ ४८ ॥
आशीर्वादेनचास्माकंकेशवस्यप्रसादतः ॥ अवश्यंतवराजेंद्रपुत्रप्राप्तिर्भविष्य-
ति ॥ ४९ ॥ इत्येववचनात्तेषांकृतंराज्ञाव्रतंशुभं ॥ द्वादश्यांपारणंकृत्वामुनी-
न्नत्वापुनःपुनः ॥ ५० ॥ आजगामगृहंराजाराज्ञीगर्भंसमादधौ ॥ मुनीनां
वचनेनैवपुत्रदायाः प्रभावतः ॥ ५१ ॥ पुत्रोजातस्तथाकालेतेजस्वीपुण्यकर्म-
कृत् ॥ पितरंतोषयामासप्रजापालोबभूवसः ॥ ५२ ॥ एतस्मात्कारणाद्राज-

न्कर्तव्यंपुत्रदाव्रतम् ॥ लोकानांचहितार्थायतवाग्रेकथितंमया ॥ ५३ ॥ एत-
द्व्रतंतुयेमर्त्याः कुर्वंतिपुत्रदाभिधम् ॥ तेषांचैवभवेत्पुत्रोह्यवश्यंमोक्षभागिनः ॥
५४ ॥ पठनाच्छ्रवणाद्राजन्नश्वमेधफलंलभेत् ॥ ५५ ॥ ॥ इतिश्रीभवि०
पुरा० पौषशु० पुत्रदानाम्न्यामाहात्म्यंसंपूर्णम् ॥ ॥ अथमाघकृष्णैका-
दशीकथा ॥ ॥ दाल्भ्यउवाच ॥ मर्त्यलोकेतुसंप्राप्ताःपापंकुर्वंतिजंतवः ॥
ब्रह्महत्यादिपापैश्चह्यन्यैश्चविविधैर्युताः ॥ १ ॥ परद्रव्यापहाराश्चपरव्यसन-
मोहिताः ॥ कथंनयांतिनरकान्ब्रह्मंस्तद्ब्रूहितत्त्वतः ॥ २ ॥ अनायासेनभग-
वन्दानेनाल्पेनकेनचित् ॥ पापंप्रशममायातियेनतद्वक्तुमर्हसि ॥ ३ ॥ ॥ ग-
भस्तिरुवाच ॥ ॥ साधुसाधुमहाभागगुह्यमेतदुदाहृतम् ॥ यन्नकस्यचिदा-

ख्यातंब्रह्मविष्णिंवद्रदेवतैः ॥ ४ ॥ तदहंकथयिष्यामित्वयापृष्टोद्विजोत्तम ॥
ततोमाघेतुसंप्राप्तेशुचिःस्नातोजितेंद्रियः ॥ ५ ॥ कामक्रोधाभिमानेर्ष्यालोभ-
पैशुन्यवर्जितः ॥ देवदेवंचसंस्मृत्यपादौप्रक्षाल्यवारिणा ॥ ६ ॥ भूमावपति-
तंग्राह्यंगोमयंतत्रमानवैः ॥ तिलान्प्रक्षिप्यकार्पासंपिंडकांश्चैवकारयेत् ॥ ७ ॥
॥ अष्टोत्तरशतंचैवनात्रकार्याविचारणा ॥ ततोमाघेचसंप्राप्तेह्यार्दौचैवभवेद्यदि
॥ ८ ॥ मूलेवाकृष्णपक्षस्यैकादश्यांनियमंततः ॥ गृह्णीयात्पुत्रफलदंविधानं
तत्रमेशृणु ॥ ९ ॥ देवदेवंसमभ्यर्च्यसुस्नातःप्रयतःशुचिः ॥ कृष्णना-
मानिसंकीर्त्यक्षुतजृंभासुसर्वदा ॥१०॥ रात्रौजागरणंकुर्याद्रात्रौहोमंचकारयेत्
॥ अर्चयेद्देवदेवेशंशंखचक्रगदाधरम् ॥ ११ ॥ चंदनागरुकर्पूरंनैवेद्यंकृस-

रंतथा ॥ संस्मृत्यनाम्नाचततःकृष्णाख्येनपुनःपुनः ॥ १२ ॥ कूष्मां-
डैर्नारिकेलैश्चह्यथवाबीजपूरकैः ॥ सर्वाभावेपिविप्रेंद्रशस्तंपूगीफलंतथा ॥
१३ ॥ अर्घ्यंदत्वाविधानेनपूजयित्वाजनार्दनम् ॥ कृष्णकृष्णकृपालुस्त्वमग-
तीनांगतिप्रद ॥ १४ ॥ संसारार्णवमग्नानांप्रसीदपरमेश्वर ॥ नमस्तेपुंडरी-
काक्षनमस्तेविश्वभावन ॥ १५ ॥ सुब्रह्मण्यनमस्तेस्तुमहापुरुषपूर्वज ॥
गृहाणार्घ्यंमयादत्तंलक्ष्म्यासहजगत्पते ॥ १६ ॥ ततस्तुपूजयेद्विप्रमुदकुंभंप्र-
दापयेत् ॥ छत्रोपानहवस्त्रैश्चकृष्णोमेप्रीयतामिति॥ १७ ॥ कृष्णाधेनुःप्रदात-
व्यायथाशक्त्याद्विजोत्तम ॥ तिलपात्रंद्विजश्रेष्ठदद्यात्तत्रविचक्षणः ॥ १८ ॥
स्नानप्राशनयोःशस्ताःश्वेताःकृष्णास्तिलामुने ॥ तान्प्रदद्यात्प्रयत्नेनयथाश-

कयाद्विजोत्तम ॥ १९ ॥ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ तिलस्नायी तिलोद्वर्तीतिलहोमीतिलोदकी ॥ २० ॥ तिलभुक्तिलदाताचषट्तिलाःपापनाशकाः ॥ ॥ नारदउवाच ॥ ॥ कृष्णकृष्णमहाबाहोनमस्तेभक्तभावन ॥ २१ ॥ षट्तिलैकादशीभूतंकीदृशंफलमश्नुते ॥ सोपाख्यानंममब्रूहियदितुष्टोऽसियादव ॥ २२ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुराजन्यथावृत्तंदृष्टंतत्कथयामिते ॥ मृत्युलोकेपुराह्यासीद्ब्राह्मणीतत्रनारद ॥ २३ ॥ व्रतचर्यारतानित्यं देवपूजारतासदा ॥ मासोपवासनिरताममभक्ताचसर्वदा ॥ २४ ॥ कृष्णोपवाससंयुक्ताममपूजापरायणा ॥ शरीरंक्लेशितंनित्यमुपवासैर्द्विजोत्तम ॥ २५ ॥ दीनानांब्राह्मणानांचकुमारीणांचभक्तितः ॥ गृहादिकंप्रयच्छंतीसर्वकालंमहा-

मतिः ॥ २६ ॥ अतिकृच्छ्ररतासा तु सर्वकालेषु वै द्विज ॥ शुद्धमस्याः शरीरं हि
व्रतैः कृच्छ्रैर्न संशयः ॥ २७ ॥ अर्थिनं वैष्णवं लोकं कायक्लेशेन वै त्वया ॥ नदत्तमन्नदानं हि येन तृप्तिः परा भवेत् ॥ २८ ॥ एतज्ज्ञातं मया ब्रह्मन्मृत्युलोकमुपागतः ॥ कापिलं रूपमास्थाय भिक्षापात्रेण याचिता ॥ २९ ॥ ॥ कस्मात्त्वमागतो
ब्रह्मन्वद यस्मात्समागतः ॥ पुनरेवमया प्रोक्तं देहि भिक्षां च सुंदरि ॥ ३० ॥
तया कोपेन महता मृत्पिंडस्ताम्रभाजने ॥ क्षिप्तो यावत्तया देव्या पुनः स्वर्गं गतो
द्विज ॥ ३१ ॥ ततः कालेन महता तापसी सुमहाव्रता ॥ कदाचित्स्वर्गमायाता
व्रतचर्याप्रसादतः ॥ ३२ ॥ मृत्पिंडस्य प्रभावेण गृहं प्राप्तं मनोरमम् ॥ संजातं
चैव विप्रर्षे धान्यकोशविवर्जितम् ॥ ३३ ॥ गृहं यावन्निरीक्षेत न किंचित्तत्र पश्य-

ती ॥ तावद्गृहाद्विनिष्क्रांताममांतेचागताद्विज ॥ ३४ ॥ क्रोधेनमहताविष्टाइ-
दंवचनमब्रवीत् ॥ मयाव्रतैश्चकृच्छ्रैश्चह्युपवासैरनेकशः ॥ ३५ ॥ पूजयाऽऽरा-
धितोदेवःसर्वलोकस्यभावनः ॥ नधनंदृश्यतेकिंचिद्गृहेममजनार्दन ॥ ३६ ॥
ततश्चोक्तामयासातुगृहंगच्छयथागतम् ॥आगमिष्यंतिसुतरांकौतूहलसमन्वि-
ताः ॥ ३७ ॥ देवपत्न्यस्तवद्रष्टुंविस्मयेनसमन्विताः ॥ द्वारंनोद्घाटनीयंहिष-
ट्तिलापुण्यवाचनात् ॥ ३८ ॥ एवमुक्तागतासातुयदावैमानुषीतदा ॥ अत्रां-
तरेसमायातादेवपत्न्यश्चनारद ॥ ३९ ॥ ताभिश्चकथितंतत्रत्वांद्रष्टुंहिसमाग-
ताः ॥ द्वारमुद्घाटयत्वंचपश्यामस्त्वांशुभानने ॥ ॥ ४० ॥ ॥ मानुष्युवाच ॥
यदिद्रष्टुंमयाकार्यंसत्यंवाच्यंविशेषतः ॥षट्तिलापुण्यंवदतद्वारोद्घाटनकारणात्

॥४१॥एकापिनाव्रदत्तत्रषट्तिलाव्रतनाशतः । अन्ययाकथितंतत्रद्रष्टव्यामानु-
षीमया॥४२ ॥ ततोद्वारंसमुद्घाट्यदृष्टाताभिश्चमानुषी॥नदेवीनचगंधर्वीनासुरी-
नचपन्नगी॥दृष्टापूर्वंतयानारीईदृशीसाद्विजर्षभ ॥४३॥ रूपकांतिसमायुक्ताक्ष-
णेनसमपद्यत ॥धनंधान्यंचवस्त्रादिसुवर्णंरौप्यमेवच॥४४॥सर्वंभवतिसंपन्नंषट्-
तिलायाःप्रसादतः ॥ अतितृष्णानकर्तव्याविक्तशाठ्यंविवर्जयेत् ॥४५॥ आत्म-
वित्तानुसारेणतिलान्वस्त्रादिदापयेत् ॥ लभतेचैवमारोग्यंततोजन्मनिजन्मनि॥
४६॥ दारिद्र्यंनचकष्टंवैनचदौर्भाग्यमेवच ॥नभवेद्वैद्विजश्रेष्ठषट्तिलायाउपोष-
णात् ॥४७॥ अनेनविधिनाराजन्तिलदानान्नसंशयः ॥ मुच्यतेपातकैःसर्वैर्ना-
त्रकार्याविचारणा ॥ ४८ ॥ दानंचविधिनासम्यक्सर्वपापप्रणाशनम् ॥ नानर्थः

कश्चिन्नायासः शरीरेमुनिसत्तम ॥ ४९ ॥ इति श्रीभ० माघकृष्णैकादशीषट्-
तिलामाहात्म्यंसमाप्तम् ॥ ॥ अथमाघशुक्लैकादशीकथा ॥ युधिष्ठिरउवाच ॥
॥ साधुकृष्णत्वयाप्रोक्ताआदिदेवजगत्पते ॥ स्वेदजाअंडजाश्चैवउद्भिज्जाश्च
जरायुजाः ॥ १ ॥ तेषांकर्ताविकर्ताचपालकःक्षयकारकः ॥ माघस्यकृष्णपक्षे
तुषट्तिलाकथितात्वया ॥ २ ॥ शुक्लेचैकादशीयाचकथयस्वप्रसादतः ॥ किं
नामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते ॥ ३ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ क-
थयिष्यामिराजेंद्रशुक्लेमाघस्ययाभवेत् ॥ जयानाम्नीतिविख्यातासर्वपापह-
रापरा ॥ ४ ॥ पवित्रापापहंत्रीचपिशाचत्वविनाशिनी ॥ नैवतस्याव्रतेचीर्णे
प्रेतत्वंजायतेनृणाम् ॥ ५ ॥ नातःपरतराकाचित्पापघ्नीमोक्षदायिनी ॥ ए-

तस्मात्कारणाद्राजन्कर्तव्येयंप्रयत्नतः ॥६॥ श्रूयतांराजशार्दूलकथांपौराणिकीं
शुभां ॥ पंकजेचपुराणेस्यामहिमाकथितोमया ॥ ७ ॥ एकदानागलोकेवैइं
द्रोराज्यंचकारह ॥ देवाश्चतत्रसख्येननिवसंतिमनोरमे ॥ ८ ॥ पीयूषपान-
निरताह्यप्सरोगणसेविताः ॥ नंदनंतुवनंतत्रपारिजातोपशोभितम् ॥ ९ ॥
रमयंतिरमंतेत्रह्यप्सरोभिर्दिवौकसः ॥ एकदारममाणोऽसौदेवेंद्रःस्वेच्छयानृप
॥ १० ॥ नर्तयामासहर्षात्सपंचाशत्कोटिनायिकाः ॥ ॥गंधर्वास्तत्रगायंतिगं-
धर्वःपुष्पदंतकः॥११॥चित्रसेनश्चतत्रैवचित्रसेनसुतातथा।मालिनीतिचनाम्ना
तुचित्रसेनस्यकामिनी ॥ १२ ॥ मालिन्यांतुसमुत्पन्नःपुष्पवानितिनामतः॥
पुष्पदंतस्यपुत्रोवैमाल्यवान्नामनामतः ॥ १३ ॥ गंधर्वीपुष्पवत्याख्यामाल्य-

वत्यतिमोहिता ॥ कामस्यचशरैस्तीक्ष्णैर्विद्धांगीसाबभूवह ॥ १४ ॥ तयाभा-
वकटाक्षैश्चमाल्यवांश्चवशीकृतः ॥ लावण्यरूपसंपन्नातस्यारूपंनृपशृणु॥१५॥
बाहूतस्यास्तुकामेनकंठपाशौकृताविव ॥ चंद्रवद्वदनंतस्यानयनेश्रवणायते ॥
१६ ॥ कर्णौतुशोभितौतस्याःकुंडलाभ्यांनृपोत्तम ॥ कंबुग्रीवायुताचैवदिव्या-
भरणभूषिता ॥१७॥पीनोन्नतौकुचौतस्यामुष्टिमात्रंचमध्यमम् ॥नितंबौविपुलौ
तस्याविस्तीर्णंजघनस्थलम् ॥ १८ ॥ चरणौशोभमानौतौरक्तोत्पलसमद्युती ॥
ईदृश्यापुष्पवत्याचमाल्यवानतिमोहितः ॥ १९ ॥ शक्रस्यपरितोषायनृत्या-
र्थंतौसमागतौ ॥ गायमानौचतौतत्रह्यप्सरोगणसंगतौ ॥ २० ॥ नशुद्धगानं
गायेतांचित्तभ्रमसमन्वितौ ॥ २१ ॥ ज्ञात्वालेखर्षभस्तत्रसंगतंमानसंतयोः ॥

तालकालक्रियामानलोपाद्गीतावभंजनात् ॥ २२ ॥ चिंतयित्वातुमघवानवज्ञा-
नंतथात्मनः ॥ कुपितश्चतयोरित्थंशापंदास्यन्निदंजगौ ॥ २३ ॥ धिग्वांपाप-
रतौमूढावाज्ञाभंगकरौमम ॥ युवांपिशाचौभवतंदंपत्योरूपधारिणौ ॥ २४ ॥
मृत्युलोकमनुप्राप्तौभुंजानौकर्मणःफलम् ॥ एवंमघवताशप्तावुभौदुःखितमान-
सौ ॥ २५ ॥ हिमवंतमनुप्राप्ताविंद्रशापविमोहितौ ॥ उभौपिशाचतांप्राप्तौदा-
रुणंदुःखमेवच ॥ २६ ॥ संप्राप्तमानसौतत्रमहाकृच्छ्रगतावुभौ ॥ गंधंरसंचस्प-
र्शंचनजानंतौविमोहितौ ॥ २७ ॥ पीड्यमानौतुदाहेनदेहपातकरेणच ॥
तौननिद्रासुखंप्राप्तौकर्मणातेनपीडितौ ॥ २८ ॥ परस्परंभाषमाणौचेरतुर्गिरि-
गव्हरम् ॥ पीड्यमानौतुशीतेनतुषारप्रभवेणतौ ॥ २९ ॥ दंतघर्षंप्रकुर्वाणौ

रोमांचितवपुर्धरौ ॥ ऊचेपिशाचःशीतार्तःस्वपत्नींतुपिशाचिकाम् ॥ ३० ॥
किमावाभ्यांकृतंपापमत्यंतंदुःखदायकम् ॥ येनप्राप्तंपिशाचत्वंस्वेनदुष्कृत-
कर्मणा ॥ ३१ ॥ नरकंदारुणंमत्वापिशाचत्वंचगर्हितम् ॥ तस्मात्सर्वप्रयत्ने-
नपापंनैवसमाचरेत् ॥ ३२ ॥ इतिचिंतापरौतत्रह्यास्तांदुःखेनकर्शितौ ॥ दै-
वयोगात्तयोःप्राप्तामाघस्यैकादशीसिता ॥ ३३ ॥ जयानाम्नीतिविख्याताति-
थीनामुत्तमातिथिः॥ तस्मिन्दिनेतुसंप्राप्तेतावाहारविवर्जितौ ॥ ३४ ॥ आ-
सातेतत्रनृपतेजलपानविवर्जितौ ॥ नकृतोजीवघातश्चनपत्रफलभक्षणम्॥३५
अश्वत्थस्यसमीपेतुपतितौदुःखसंयुतौ ॥ रविरस्तंगतोराजन्तथैवास्थितयो-
स्तयोः ॥ ३६ ॥ प्राप्ताचैवनिशाघोरादारुणाशीतधारिणी ॥ वेपमानौतुतौ

तत्राहिमेनचजडीकृतौ ॥ ३७ ॥ परस्परेणसँल्लग्नौगात्रयोर्भुजयोरपि ॥ ननि-
द्रांनरतिंतत्रनतौसौख्यमविंदताम् ॥ ३८ ॥ एवंतौराजशार्दूलशापेनेंद्रस्य
पीडितौ ॥ इत्थंतयोर्दुःखितयोर्निर्जगामतदानिशा ॥ जयायास्तुव्रतेचीर्णेरा-
त्रौजागरणेकृते ॥ ३९ ॥ तयोर्व्रतप्रभावेणयथाह्यासीत्तथाशृणु ॥ द्वादशीदि-
वसेप्राप्तेताभ्यांचीर्णेजयाव्रते ॥ ४० ॥ विष्णोःप्रभावान्नृपतेः पिशाचत्वंतयो-
र्गतम् ॥ पुष्पवतीमाल्यवांश्चपूर्वरूपौबभूवतुः ॥ ४१ ॥ पुरातनस्नेहयुतौपू-
र्वालंकारसंयुतौ ॥ विमानमधिरूढौतावप्सरोगणसेवितौ ॥ ४२ ॥ स्तूयमा-
नौतुगंधर्वैस्तुंबुरुप्रमुखैस्तथा ॥ हावभावसमायुक्तौगतौनाकेमनोरमे ॥ ४३ ॥
देवेंद्रस्याग्रतोगत्वाप्रणामंचक्रतुर्मुदा ॥ तथाविधौतुतौदृष्ट्वामघवाविस्मितोऽब्र-

वीत् ॥ ४४ ॥ इंद्रउवाच ॥ वदतंकेनपुण्येनपिशाचत्वंविनिर्गतम् ॥ ममशा-
पवशंप्राप्तौकेनदेवेनमोचितौ ॥ ४५ ॥ ॥ माल्यवानुवाच ॥ वासुदेव-
प्रसादेनजयायाःसुव्रतेनच ॥ पिशाचत्वंगतंस्वामिन्सत्यंभक्तिप्रसादतः॥४६
इतिश्रुत्वावचस्तस्यप्रत्युवाचसुरेश्वरः ॥ पवित्रौपावनौजातौवंदनीयौममापि
च ॥ ४७ ॥ हरिवासरकर्तारौविष्णुभक्तिपरायणौ ॥ हरिभक्तिरतायेचशिव-
भक्तिरतास्तथा ॥ ४८ ॥ अस्माकमपितेमर्त्याःपूज्यावंद्यानसंशयः ॥ विह-
रस्वयथासौख्यंपुष्पवत्यासुरालये ॥ ४९ ॥ एतस्मात्कारणाद्राजन्कर्तव्यो
हरिवासरः ॥ जयाव्रतंतुराजेंद्रब्रह्महत्यापहारकम् ॥ ५० ॥ सर्वदानानिद-
त्तानियज्ञास्तेनकृतानृप ॥ सर्वतीर्थेषुसुस्नातःकृतंयेनजयाव्रतम् ॥ ५१ ॥

यःकरोतिनरोभक्त्याश्रद्धायुक्तोजयाव्रतम् ॥ कल्पकोटिशतंयावद्वैकुंठमोदते ध्रुवम् ॥ ५२ ॥ पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलंलभेत् ॥ ५३ ॥ ॥इतिश्री भवि० माघशु० जयामाहात्म्यंसमाप्तम् ॥ ॥ अथफाल्गुनकृष्णैकादशी-कथा ॥ ॥ युधिष्ठिरउवाच ॥ ॥ फाल्गुनस्यासितेपक्षेकिंनामैका-दशीभवेत् ॥ वासुदेवप्रसादेनकथयस्वप्रसादतः ॥ १ ॥ ॥श्रीकृष्णउवाच॥ कथयिष्यामिराजेंद्रकृष्णायाफाल्गुनीभवेत् ॥ विजयेतिचसाप्रोक्ताकर्तृणांज-यदासदा ॥ २ ॥ तस्याश्चव्रतमाहात्म्यंसर्वपापहरंपरम् ॥ नारदःपरि-पप्रच्छब्रह्माणंकमलासनम् ॥ ३ ॥ फाल्गुनस्यासितेपक्षेविजयानामया तिथिः ॥ तस्याव्रतंसुरश्रेष्ठकथयस्वप्रसादतः ॥ ४ ॥ इतिपृष्टोनारदेनप्रत्यु-

वाचपितामहः ॥ ॥ ब्रह्मोवाच ॥ ॥ शृणुनारदवक्ष्यामिकथांपापहरां
पराम् ॥ ५ ॥ पुरातनंव्रतंह्येतत्पवित्रंपापनाशनम् ॥ यन्नकस्यचिदाख्यातं
मयैतद्विजयाव्रतम् ॥ ६ ॥ जयंददातिविजयानृणांचैवनसंशयः ॥ रामस्त-
पोवनंयातोवर्षाण्येवचतुर्दश ॥ ७ ॥ न्यवसत्पंचवट्यांतुससीतश्चसलक्ष्मणः॥
तत्रैववसतस्तस्यराघवस्यमहात्मनः ॥ ८ ॥ रावणेनहृताभार्यासीतानाम्नी
तपस्विनी ॥ तेनदुःखेनरामोऽसौमोहमभ्यागतस्तदा ॥ ९ ॥ भ्रमन्जटा-
युषंतत्रददर्शविगतायुषम् ॥ कबंधोनिहतःपश्चाद्भ्रमतारण्यमध्यतः ॥ १० ॥
राज्ञेविज्ञाप्यतत्सर्वंसोऽपिमृत्युवशंगतः ॥ सुग्रीवेणसमंसख्यमजेंयन्समजाय-
त ॥ ११ ॥ वानराणामनीकानिरामार्थंसंगतानिवै ॥ ततोहनूमतादृष्टालं-

कोद्यानेतुजानकी ॥ १२ ॥ रामसंज्ञापनंतस्यैदत्तंकर्ममहत्कृतम् ॥ समेत्य
रामेणपुनःसर्वंतत्रनिवेदितम् ॥ १३ ॥ अथश्रुत्वारामचंद्रोवाक्यंचैवहनूमतः॥
सुग्रीवानुमतेनैवप्रस्थानंसमरोचयत् ॥ १४ ॥ सगत्वावानरैःसार्द्धंतीरंनदन-
दीपतेः ॥ दृष्ट्वाब्धिंदुस्तरंरामोविस्मितोऽभूत्कपिप्रियः ॥ १५ ॥ प्रोत्फुल्ललोच-
नोभूत्वालक्ष्मणंवाक्यमब्रवीत् ॥ सौमित्रेकेनपुण्येनतार्यतेवरुणालयः ॥१६ ॥
अगाधसलिलःपूर्णोनक्रैर्भीमैःसमाकुलः ॥ उपायंनैवपश्यामियेनैवसुतरोभवे-
त् ॥ १७ ॥ ॥ लक्ष्मणउवाच ॥ ॥आदिदेवस्त्वमेवासिपुराणपुरुषोत्तम॥
बकदाल्भ्योमुनिश्चात्रवर्ततेद्वीपमध्यतः ॥ १८ ॥ अस्मात्स्थानाद्योजनार्धमा-
श्रमस्तस्यराघव ॥ अनेनदृष्टाब्रह्माणोबहवोरघुनंदन ॥ १९ ॥ तंपृच्छग-

त्वाराजेंद्रपुराणमृषिपुंगवम् ॥ इतिवाक्यंततःश्रुत्वालक्ष्मणस्यातिशोभनम् ॥
२० ॥ जगामराघवोद्रष्टुंबकदाल्भ्यंमहामुनिम् ॥ प्रणनाममुनिंमूर्ध्नारामो
विष्णुमिवामरः ॥ २१ ॥ मुनिर्ज्ञात्वाततारामंपुराणपुरुषोत्तमम् ॥ केनापि
कारणेनैवप्रविष्टंमानुषींतनुम् ॥ २२ ॥ उवाचसऋषिस्तत्रकुतोरामतवागमः॥
॥ रामउवाच ॥ ॥ त्वत्प्रसादादहोविप्रवरुणालयसन्निधिम् ॥ २३ ॥
आगतोऽस्मिससैन्योऽत्रलंकांजेतुंसराक्षसाम्॥ भवतश्चानुकूल्येनतीर्यतेऽब्धि-
र्यथामया ॥ २४ ॥ तमुपायंवदमुनेप्रसादंकुरुसुव्रत ॥ एतस्मात्कारणादेव
द्रष्टुंत्वाऽहमुपागतः ॥ २५ ॥ ॥ मुनिरुवाच ॥ ॥ कथयिष्याम्यहंरा-
मव्रतानामुत्तमंत्तव्रम् ॥ कृतेनयेनसहसाविजयस्तेभविष्यति ॥ २६ ॥ लंकां

जित्वाराक्षसांश्चदीर्घांकीर्तिमवाप्स्यसि ॥ एकाग्रमानसोभूत्वाव्रतमेतत्समा-
चर ॥ २७ ॥ फाल्गुनस्यासितेपक्षेविजयैकादशीभवेत् ॥ तस्याव्रतेकृतेराम-
विजयस्तेभविष्यति ॥ २८ ॥ निःसंशयंसमुद्रंचतरिष्यसिसवानरः ॥ विधि
स्तुश्रूयतांरामव्रतस्यास्यफलप्रदः ॥ २९ ॥ दशमीदिवसेप्राप्तेकुंभमेकं
चकारयेत् ॥ हैमंवाराजतंवापिताम्रंवाप्यथमृन्मयम् ॥ ३० ॥ स्थापयेच्छो-
भितंकुंभंजलपूर्णंसपल्लवम् ॥ तस्योपरिन्यसेद्देवंहैमंनारायणंप्रभुम् ॥ ३१ ॥
एकादशीदिनेप्राप्तेप्रातःस्नानंसमाचरेत् ॥ निश्चलंस्थापयेत्कुंभंगंधमाल्यानु-
लेपनैः ॥ ३२ ॥ दाडिमैर्नारिकेलैश्चपूजयेच्चविशेषतः ॥ सप्तधान्यान्यधस्त-
त्रयवानुपरिविन्यसेत् ॥ ३३ ॥ गंधैर्धूपैस्तथादीपैर्नैवेद्यैर्विविधैरपि ॥ कुंभा-

ग्रेतद्दिनंरामनीयतेभक्तिभावतः ॥३४॥ रात्रौजागरणंतत्रतस्याग्रेकारयेद्बुधः॥
द्वादशीदिवसेप्राप्तेमार्तंडस्योदयंप्रति ॥ ३५ ॥ नीत्वाकुंभंजलोद्देशेनद्यांप्रस्र-
वणेतथा ॥ तडागेस्थापयित्वावापूजयित्वायथाविधि ॥ ३६ ॥ दद्यात्सदैवतं
कुंभंब्राह्मणेवेदपारगे ॥ कुंभेनसहराजेंद्रमहादानानिदापयेत् ॥ ३७ ॥ अनेन
विधिनारामयूथपैःसहसंगतः ॥ कुरुव्रतंप्रयत्नेनविजयस्तेभविष्यति ॥ ३८ ॥
इतिश्रुत्वावचोरामोयथोक्तमकरोत्तथा ॥ कृतेव्रतेसविजयीबभूवरघुनंदनः॥३९
अनेनविधिनाराजन्येकुर्वंतिनराव्रतम् ॥ इहलोकेजयस्तेषांपरलोकस्तथाऽक्ष-
यः ॥ ४० ॥ एतस्मात्कारणात्पुत्रकर्तव्यंविजयाव्रतम् ॥ विजयायाश्चमाहा-
त्म्यंसर्वकिल्बिषनाशनम् ॥ पठनाच्छ्रवणात्तस्यवाजपेयफलंलभेत् ॥ ४१ ॥

॥ इतिश्रीस्कंदपुराणेफाल्गुनकृष्णैकादशीविजयामाहात्म्यं समाप्तम् ॥ ॥
॥ अथफाल्गुनशुक्लैकादशीकथा ॥ ॥ मांधातोवाच ॥ ॥ वदब्रह्मन्
महाभागयेनश्रेयोभवेन्मम ॥ ईदृग्ब्रूहिब्रह्मयोनेयद्यनुग्राहितामहि ॥ १ ॥ सर-
हस्यंसेतिहासंव्रतानामुत्तमंव्रतम् ॥ ॥ वसिष्ठउवाच ॥ ॥ कथयाम्यधु-
नातुभ्यंसर्वव्रतफलप्रदम् ॥ २ ॥ आमलक्याव्रतंराजन्महापातकनाशनम् ॥
मोक्षदंसर्वलोकानांगोसहस्रफलप्रदम् ॥ ३ ॥ अत्रैवोदाहरंतीममितिहासंपु-
रातनम् ॥ यथामुक्तिमनुप्राप्तोव्याधोहिंसासमान्वितः ॥ ४ ॥ वैदिशंनामनगरं
हृष्टपुष्टजनैर्वृतम् ॥ ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चसमलंकृतम् ॥ ५ ॥ रुचिरं
नृपशार्दूलब्रह्मघोषनिनादितम् ॥ ननास्तिकोदुष्कृतिकस्तस्मिन्पुरवरेसदा॥६

तत्रसोमान्वयोराजाविख्यातःशशबिंदुकः ॥ राजाचैत्ररथोनामधर्मात्मासत्य-
संगरः ॥ ७ ॥ नागायुतबलःश्रीमान्शस्त्रशास्त्रार्थपारगः ॥ तस्मिन्शास-
तिधर्मज्ञेधर्मात्मनिधरांप्रभो ॥ ८ ॥ कृपणोनैवकुत्रापिदृश्यतेनैवनिर्धनः ॥
सुकालःक्षेममारोग्यंतस्मिन्राज्यंप्रशासति ॥ ९ ॥ विष्णुभक्तिरतालोकास्त-
स्मिन्पुरवेरसदा ॥ हरिपूजारताश्चैवराजाचापिविशेषतः ॥ १० ॥ नशुक्लांनै-
वकृष्णांचद्वादशींभुंजतेजनाः ॥ सर्वधर्मान्परित्यज्यहरिभक्तिपरायणाः ॥ ११
॥एवंसंवत्सराजग्मुर्बहवोराजसत्तम ॥ जनस्यसौख्ययुक्तस्यहरिभक्तिरतस्यच
॥ १२ ॥ अथकालेनसंप्राप्ताद्वादशीपुण्यसंयुता ॥ फाल्गुनस्यासितेपक्षेना-
म्नाह्यामलकीस्मृता ॥ १३ ॥ तामवाप्यजनाःसर्वेबालकाःस्थविरानृप ॥ नि-

यमंचोपवासंचसर्वेचक्रुर्नराविभो ॥ १४ ॥ महाफलंव्रतंकर्तुंस्नानंकृत्वानदीज-
ले ॥ तत्रदेवालयेराजालोकयुक्तोमहाप्रभुः ॥ १५ ॥ पूर्णकुंभमवस्थाप्यछत्रो-
पानहसंयुतम् ॥ पंचरत्नसमायुक्तंदिव्यगंधाधिवासितम् ॥ १६ ॥ दीपमा-
लान्वितंचैवजामदग्न्यसमन्वितम् ॥ पूजयामासुरव्यग्राधात्रींचमुनिभिर्जनाः
॥ १७ ॥ जामदग्न्यनमस्तेऽस्तुरेणुकानंदवर्धन ॥ आमलकीकृतच्छायभुक्ति-
मुक्तिवरप्रद ॥१८॥ धात्रिधातृसमुद्भूतेसर्वपातकनाशिनि ॥ आमलकिनमस्तु-
भ्यंगृहाणार्घ्योदकंमम ॥ १९ ॥ धात्रिब्रह्मस्वरूपासित्वंतुरामेणपूजिता॥ प्रद-
क्षिणाविधानेनसर्वपापहराभव ॥ २० ॥ तत्रजागरणंचक्रुर्जनाः सर्वेस्वभ-
क्तितः ॥ एतस्मिन्नेवकालेतुव्याधस्तत्रसमागतः ॥ २१ ॥ क्षुधाश्रमपरिव्याप्तो

महाभारेणपीडितः ॥ कुटुंबार्थंजीवघातीसर्वधर्मबहिष्कृतः ॥ २२ ॥ जागरं तत्रसोऽपश्यदामलक्यांक्षुधान्वितः ॥ दीपमालाकुलंदृष्ट्वातत्रैवनिषसादसः ॥ २३ ॥ किमेतदितिसंचिंत्यप्राप्तोविस्मयितांभृशं ॥ ददर्शकुंभंतत्रस्थंदेवंदामोदरंतथा ॥ २४ ॥ ददर्शामलकीवृक्षंतत्रस्थांश्चैवदीपकान् ॥ वैष्णवंचतथाऽऽख्यानंशुश्रावपंठतांनृणाम् ॥ २५ ॥ एकादश्याश्चमाहात्म्यंशुश्रावक्षुधितोऽपिसन् ॥ जाग्रतस्तस्यसारात्रिर्गताविस्मितचेतसः ॥ २६ ॥ ततःप्रभातसमयेविविशुर्नगरंजनाः ॥ व्याधोपिगृहमागत्यबुभुजेप्रीतमानसः ॥ २७ ॥ ततःकालेनमहताव्याधःपंचत्वमागतः ॥ एकादश्याःप्रभावेणरात्रौजागरणेन च ॥ २८ ॥ राज्यंप्रपेदेसुमहच्चचतुरंगबलान्वितम् ॥ जयंतीनामनगरीतत्र

राजाविदूरथः ॥ २९ ॥ तस्मात्सतनयोजज्ञेनाम्नावसुरथोवली ॥ चतुरंगब-
लोपेतोधनधान्यसमान्वितः ॥ ३० ॥ दशायुतानिग्रामाणांबुभुजेभयवर्जितः॥
तेजसाऽदित्यसदृशःकांत्याचंद्रसमप्रभः ॥ ३१ ॥ पराक्रमेविष्णुसमःक्षमया
पृथिवीसमः ॥ धार्मिकःसत्यवादीचविष्णुभक्तिपरायणः ॥ ३२ ॥ ब्रह्मज्ञःकर्म-
शीलश्चप्रजापालनतत्परः ॥ यजतेविविधान्यज्ञान्सराजापरदर्पहा ॥ ३३ ॥
दानानिविविधान्येवप्रददातिचसर्वदा ॥ एकदामृगयांयातोदैवमार्गपरिच्यु-
तः ॥ ३४ ॥ नदिशोनैवविदिशोवेत्तितत्रमहीपतिः ॥ उपधायचदोर्मूलमेका-
कीगहनेवने ॥ ३५ ॥ श्रांतश्चक्षुधितोऽत्यंतंसंविवेशमहीपतिः ॥ अत्रांतरे
म्लेच्छगणःपर्वतांतरवासभाक् ॥ ३६ ॥ आययौतत्रयत्रास्तेराजापरबलार्द-

नः ॥ कृतवैरास्तुतेराज्ञासर्वेदैवोपतापिताः ॥ ३७ ॥ परिवार्यततस्तस्थूरा-
जानंभूरिदाक्षिणम् ॥ हन्यतांहन्यतांचायंपूर्ववैरविरुद्धधीः ॥ ३८ ॥ अनेन
निहताःपूर्वंपितरोभ्रातरःसुताः ॥ पौत्राश्चभागिनेयाश्चमातुलाश्चनिपातिताः॥
॥ ३९ ॥ निष्कासिताश्चस्वस्थानाद्विक्षिप्ताश्चदिशोदश ॥ एतावदुक्त्वातेस-
र्वेतत्रैनंहंतुमुद्यताः ॥ ४० ॥ पाशैश्चपट्टिशैःखड्गैर्बाणैर्धनुषिसंस्थितैः ॥ सर्व-
तोऽरिगणास्तेचराजानंहंतुमुद्यताः ॥ ४१ ॥ सर्वाणिशस्त्राणिसमाद्रवंतिनवै-
शरीरेप्रविशंतितस्य ॥ तेचापिसर्वेहतशस्त्रसंघाम्लेच्छाबभूवुर्गतदेहजीवाः ॥
४२ ॥ तदापिचलितुंतत्रनशेकुस्तेऽरयोभृशम् ॥ शस्त्राणिकुंठतांजग्मुःसर्वे-
षांहतचेतसाम् ॥ ४३ ॥ दीनाबभूवुस्तेसर्वेयेतंहंतुंसमागताः ॥ एतस्मिन्नेव

कालेतुतस्यराज्ञःशरीरतः ॥ ४४ ॥ निःसृताप्रमदाह्येकासर्वावयवशोभना॥
दिव्यगंधसमायुक्तादिव्याभरणभूषिता ॥ ४५ ॥ दिव्यमाल्यांबरधराभ्रुकुटी-
कुटिलानना ॥ स्फुलिंगाभ्यांचनेत्राभ्यांपावकंवमतीबहु ॥ ४६ ॥ चक्रोद्यत-
कराचैवकालरात्रिरिवापरा ॥ अभ्यधावतसंक्रुद्धान्म्लेच्छानत्यंतदुःखितान् ॥
४७ ॥ निहताश्चयदाम्लेच्छास्तेविकर्मरतास्तथा ॥ ततोराजाविबुद्धःसन्दद-
र्शमहदद्भुतम् ॥ ४८ ॥ हतान्म्लेच्छगणान्दृष्ट्वाराजाहर्षमवापसः ॥ इहकेन
हताम्लेच्छाअत्यंतंवैरिणोमम ॥ ४९ ॥ केनचेदंमहत्कर्मकृतमस्मद्धितार्थिना॥
एतस्मिन्नेवकालेतुवागुवाचाऽशरीरिणी ॥ ५० ॥ तंस्थितंनृपतिंदृष्ट्वानिकामं
विस्मयान्वितम् ॥ शरणंकेशवादन्योनास्तिकोपिद्वितीयकः ॥ ५१ ॥ वनात्त-

स्मात्सकुशलीसमायातोऽपिभूमिभुक् ॥ राज्यंचकारधर्मात्माधरायांदेवतेश-
वत् ॥ ५२ ॥ ॥ वसिष्ठउवाच ॥ ॥ तस्मादामलकींराजन्ये
कुर्वंतिनरोत्तमाः ॥ तेयांतिवैष्णवंलोकंनात्रकार्याविचारणा ॥ ५३ ॥ ॥
॥ इतिश्रीब्रह्मांडपुराणेफाल्गुनशु० आमलकीमाहात्म्यंसमाप्तम् ॥ ॥ अथ
चैत्रकृष्णैकादशीकथा ॥ ॥ युधिष्ठिरउवाच ॥ ॥ फाल्गुनस्यासि-
तेपक्षेश्रुतासाऽऽमलकीमया ॥ चैत्रस्यकृष्णपक्षेतुकिंनामैकादशीभवेत् ॥ १ ॥
॥ श्रीकृष्णउवाच ॥ शृणुराजेंद्रवक्ष्यामिअज्ञातपापनाशनं ॥ यल्लोमशोऽब्र-
वीत्पृष्टोमांधात्राचक्रवर्तिना ॥ २ ॥ मांधातोवाच ॥ भगवन्श्रोतुमिच्छामि
लोकानांहितकाम्यया ॥ चैत्रेमास्यसितेपक्षेकिंनामैकादशीभवेत् ॥३॥ कोवि-

धि किंफलंतस्याःकथयस्वप्रसादतः ॥लोमशउवाच॥ श्रूयतांराजाशार्दूलकाम-
दांमृद्विदांतथा ॥ कथांविचित्रांशुभदांपापहांधर्मदायिनीम् ॥४॥ पुराचैत्रर-
थोद्देशेअप्सरोगणसेविते ॥ वसंतसमयेप्राप्तेपुष्पैराकुलितेवने ॥५॥ गंधर्व-
कन्यस्तत्रैववरमंतिसहकिन्नरैः ॥ पाकशासनमुख्याश्चक्रीडंतेचदिवौकसः ॥६॥
नापरंसुंदरंकिंचिद्वनाच्चैत्ररथाद्वनम् ॥ तस्मिन्वनेतुमुनयस्तपंतिबहुलंतपः ।
॥ ७ । सहदेवैस्तुमघवारमतेमधुमाधवौ ॥ एकोमुनिवरस्तत्रमेधावीनामना-
मतः ॥८॥ अप्सरास्तंमुनिवरंमोहनायोपचक्रमे ॥ मंजुघोषेतिविख्याता
भावंतस्यविचिन्वती ॥ ९ ॥ क्रोशमात्रंस्थितातस्यभयादाश्रमसन्निधौ ॥
गायंतीमधुरंसाधुपीडयंतीविपांचिकाम् ॥ १० ॥ गायंतींतामथालोक्यपुष्प-

चंदनवेष्टिताम् ॥ कामोऽपिविजयाकांक्षीशिवभक्तंमुनीश्वरम् ॥ ११ ॥ तस्याः शरीरसंसर्गेशिववैरमनुस्मरन् ॥ तुल्यभ्रुवोधनुःकोटीगुणंकृत्वाकटाक्षकम् ॥ १२ ॥ मार्गणौनयनेकृत्वापक्ष्मयुक्तौयथाक्रमम् ॥ कुचौकृत्वापटकुटींविजया-योपसंस्थितः ॥१३॥ मंजुघोषाऽभवत्तत्रकामस्यैववरूथिनी ॥ मेधाविनंमुनिं दृष्ट्वासापिकामेनपीडिता ॥ १४ ॥ यौवनोद्भिन्नदेहोऽसौमेधाव्यतिविराजते ॥ सितोपवीतसहितोदंडीस्मरइवापरः ॥ १५ ॥ मेधावीवसतिस्मासौच्यवन-स्याश्रमेशुभे ॥ मंजुघोषास्थितातत्रदृष्ट्वातंमुनिपुंगवम् ॥ १६ ॥ मदनस्यव-शंप्राप्तामंदंमंदमगायत ॥ रणद्वलयसंयुक्ताशिंजन्नूपुरमेखला ॥ १७ ॥ गायं-तींभावसंयुक्तंविलोक्यमुनिपुंगवः ॥ मदनेनससैन्येननीतोमोहवशंबलात् ॥

१८ ॥ मंजुघोषासमागम्यमुनिंदृष्ट्वातथाविधम् ॥ हावभावकटाक्षैस्तुमोहयामासचांगना ॥ १९ ॥ अधःसंस्थाप्यवीणांसासस्वजेतंमुनीश्वरम् ॥ वल्लीवाकुलितावृक्षंवातवेगेनवेपिता ॥२०॥ सोऽपिरेमेतयासार्धंमेधावीमुनिपुंगवः ॥ तस्मिन्नेववनोद्देशेदृष्ट्वातद्देहमुत्तमम् ॥ २१ ॥ शिवतत्त्वंगतंतस्यकामतत्त्ववशंगतः ॥ ननिशांनदिनंसोपिरमन्जानातिकामुकः ॥ २२ ॥ बहुलश्चगतःकालोमुनेराचारलोपकः ॥ मंजुघोषादेवलोकगमनायोपचक्रमे ॥ २३ ॥ गच्छंतीप्रत्युवाचाथरमंतंमुनिपुंगवम् ॥ आदेशोदीयतांमह्यंस्वधामगमनायमे ॥ २४ ॥ ॥ मेधाव्युवाच ॥ ॥ अद्यैवत्वंसमायाताप्रदोषादौवरानने ॥ यावत्प्रभातसंध्यास्यात्तावत्तिष्ठममांतिके ॥ २५ ॥ इतिश्रुत्वामुनेर्वाक्यंभयभीता

फ
२

बभूवसा ॥ पुनर्वैरमयामासतंमुनिंमुनिसत्तमम् ॥ २६ ॥ मुनिशापभयाद्भीः
ताबहुलान्परिवत्सरान् ॥ वर्षाणांपंचपंचाशच्छतंमासान्दिनत्रयम् ॥ २७ ॥
सारेमेमुनिनातेननिशार्धमिवचाभवत् ॥ साचतंप्रत्युवाचाथतस्मिन्कालेगते
मुनिम् ॥ २८ ॥ आदेशोदीयतांब्रह्मन्गंतव्यंस्वगृहेमम ॥ ॥ मेधाव्युवाच ॥
प्रातःकालोधुनैवास्तेश्रूयतांवचनंमम ॥ कुर्वेसंध्यादिकंयावत्तावत्त्वंवैस्थिराभ-
व ॥ २९ ॥ इतिवाक्यंमुनेःश्रुत्वाभयेनचसमाकुला ॥ स्मितंकृत्वातुसाकिंचि-
त्प्रत्युवाचसुविस्मिता ॥ ३० ॥ ॥ अप्सराउवाच ॥ ॥ कियत्प्रमाणाविप्रेंद्र
तवसंध्यागतानवा ॥ मयिप्रसादंकृत्वातुगतःकालोविचार्यताम् ॥ ३१ ॥ इ-
तितस्यावचःश्रुत्वाविस्मयोत्फुल्ललोचनः ॥ सध्यात्वाहृदिविप्रेंद्रःप्रणाममक-

रोत्तदा ॥ ३२ ॥ समाश्वसप्तपंचाशद्गतामममतयासह ॥ नेत्राभ्यांविस्फुलिंगा-
न्समुंचमानोऽतिकोपनः ॥ ३३ ॥ कालरूपांचतांदृष्ट्वातपसःक्षयकारिणीम् ॥
दुःखार्जितंममतपोनीतंतदनयाक्षयम् ॥ ३४ ॥ सकंपोष्ठोमुनिस्तत्रप्रत्युवाचा-
कुलेंद्रियः ॥ सतांशशापमेधावीत्वंपिशाचीभवेतिच ॥ ३५ ॥ धिक्त्वांपापे
दुराचारेकुलटेपातकप्रिये ॥ तस्यशापेनसादग्धाविनयावनतास्थिता ॥३६॥
उवाचवचनंसुभ्रूःप्रसादंवांछतीमुनिम् ॥ प्रसादंकुरुविप्रेंद्रशापस्यानुग्रहंकुरु ॥
३७ ॥ सतांसंगोहिफलतिवचोभिःसप्तमेपदे ॥ त्वयासहममब्रह्मन्गताःसुब-
हवःसमाः ॥ ३८ ॥ एतस्मात्कारणात्स्वामिन्प्रसादंकुरुसुव्रत ॥ मुनिरुवाच ॥
॥ शृणुमद्वचनंभद्रेममानुग्रहकारकम् ॥ किंकरोमित्वयापापेक्षयंनीतंमहत्तपः

॥ ३९ ॥ चैत्रस्यकृष्णपक्षेयाभवत्येकादशीशुभा ॥ पापमोचानिकानामसर्वपा-
पक्षयकरी ॥ ४० ॥ तस्याव्रतेकृतेसुभ्रुपिशाचत्वंप्रयास्यति ॥ इत्युक्त्वातांस
मेधावीजगामापितुराश्रमम् ॥ ४१ ॥ तमागतंसमालोक्यवचनंप्रत्युवाचह ॥
किमेतद्विहितंपुत्रत्वयापुण्यक्षयःकृतः ॥ ४२ ॥ ॥ मेधाव्युवाच ॥ ॥ पापं
कृतंमहत्तातरमिताचाप्सरामया ॥ प्रायश्चित्तंब्रूहितातयेनपापक्षयोभवेत् ॥४३
॥ च्यवनउ० ॥ चैत्रस्यचासितेपक्षेनाम्नावैपापमोचनी ॥ अस्याव्रतेकृतेपुत्र
पापराशिःक्षयंव्रजेत् ॥ ४४ ॥ इतिश्रुत्वापितुर्वाक्यंकृतंतेनव्रतोत्तमम् ॥ गतं
पापंक्षयंतस्यपुण्ययुक्तोबभूवसः ॥ ४५ ॥ सोप्येवंमंजुघोषाचकृत्वातद्व्रतमुत्त-
मम् ॥ पिशाचत्वविनिर्मुक्तापापमोचनिकाव्रतात् ॥ ४६ ॥ दिव्यरूपध-

रासापिगतानाकंवराऽप्सराः ॥ ॥लोमशउवाच॥ ॥इत्थंभूतप्रभावंहिपापमो-
चनिकाव्रतम् ॥ ४७ ॥ पापमोचनिकांराजन्येकुर्वंतिचमानवाः ॥ तेषांपापं
चयत्किंचित्तत्सर्वंक्षयतांव्रजेत् ॥४८॥ पठनाच्छ्रवणाद्राजन्गोसहस्रफलप्रदा॥
ब्रह्महाहेमहारीचसुरापोगुरुतल्पगः ॥ ४९ ॥ व्रतस्यचास्यकरणात्पापमुक्ता
भवंतिते ॥ बहुपुण्यप्रदंह्येतत्करणाद्व्रतमुत्तमम् ॥५०॥ इतिश्रीभवि०चैत्रकृष्ण-
पापमोचनिकानामैकादशीमाहात्म्यंसमाप्तम् ॥ ॥ अथचैत्रशुक्लैकादशीक-
था ॥ ॥॥ सूतउवाच ॥ ॥ देवकीनंदनं कृष्णंवसुदेवात्मजंहरिम् ॥ नम-
स्कृत्वाप्रवक्ष्यामिमहापातकहानितु ॥ १ ॥ युधिष्ठिरायकृष्णेनकथितानिमहा-
त्मना ॥ एकादशीमाहात्म्यानिनानापापहराणिच ॥ २ ॥ अष्टादशपुराणेभ्यो

दीपंददातियोमर्त्योदिवारात्रौहरेर्दिने ॥ तस्यपुण्यस्यसंख्यानंचित्रगुप्तोपिवे-
त्तिन ॥ २६ ॥ कृष्णाग्रेदीपकोयस्यज्वलेदेकादशीदिने ॥ पितरस्तस्यतृप्यं-
तिअमृतेनदिविस्थिताः ॥ २७ ॥ घृतेनदीपंप्रज्वाल्यतिलतैलेनवापुनः ॥
प्रयातिसूर्यलोकेऽसौदीपकोटिशतैर्वृतः ॥ २८ ॥ अयंतवाग्रेकथितःकामिका-
महिमामया ॥ अंतोनरैःप्रकर्तव्यासर्वपातकहारिणी ॥ २९ ॥ ब्रह्महत्याऽप-
हरणीभ्रूणहत्याविनाशिनी ॥ त्रिदिवस्थानदात्रीचमहापुण्यफलप्रदा ॥ ३० ॥
श्रुत्वामाहात्म्यमेतस्यानरःश्रद्धासमन्वितः ॥ विष्णुलोकमवाप्नोतिसर्वपापैः
प्रमुच्यते ॥ ३१ ॥ ॥ इतिश्रीब्रह्मवैवर्तपुराणेश्रावणकृष्णैकादशीकामिका-
माहात्म्यंसमाप्तं ॥ ॥ अथश्रावणशुक्लैकादशीकथा ॥ ॥ युधिष्ठिरउवाच॥

॥ श्रावणस्यसितेपक्षेकिंनामैकादशीभवेत् ॥ कथयस्वप्रसादेनममाग्रेमधुसूद-
न ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुष्वावहितोराजन्कथांपापहरांप-
राम् ॥ यस्याःश्रवणमात्रेणवाजपेयफलंलभेत् ॥ २ ॥ द्वापरस्ययुगस्यादौ
पुरामाहिष्मतीपुरे ॥ राजामहीजिदाख्यातोराज्यंपालयतिस्वयम् ॥ ३ ॥ पुत्र-
हीनस्यतस्यैवनतद्राज्यंसुखप्रदम् ॥ अपुत्रस्यसुखंनास्तिइहलोकेपरत्रच ॥ ४ ॥
यततोऽस्यसुखप्राप्तौकालोबहुतरोगतः ॥ नप्राप्तश्चसुतोराज्ञासर्वसौख्यप्रदो
नृणाम् ॥ ५ ॥ दृष्ट्वाऽऽत्मानंप्रवयसंराजाचिंतापरोऽभवत् ॥ सदोगतःप्रजाम-
ध्येइदंवचनमब्रवीत् ॥ ६ ॥ इहजन्मनिभोलोकानमयापातकंकृतम् ॥ अ-
न्यायोपार्जितंवित्तंक्षिप्तंकोशेमयानहि ॥ ७ ॥ ब्रह्मस्वंदेवद्रविणंनगृहीतंमया

क्वचित् ॥ न्यासापहारोनकृतःपरस्यबहुपापदः ॥ ८ ॥ सुतवत्पालितालोका धर्मेणविजितामही ॥ दुष्टेषुपातितोदंडोबंधुपुत्रोपमेष्वपि ॥ शिष्टाःसुपूजिता लोकाद्वेष्याश्चापिमहाजनाः ॥ ९ ॥ इत्येवंव्रजतोमार्गेधर्मयुक्तोद्विजोत्तमाः ॥ कस्मान्ममगृहेपुत्रोनजातस्तद्विचार्यताम् ॥ १० ॥ इतिवाक्यंद्विजाःश्रुत्वास-प्रजाःसपुरोहिताः ॥ मंत्रयित्वानृपहितंजग्मुस्तेगहनंवनम् ॥ ११ ॥ इतस्त-तश्चपश्यंतश्चाश्रमानृषिसेवितान् ॥ नृपतेर्हितमिच्छंतोददृशुर्मुनिसत्तमम् ॥ १२ ॥ तप्यमानंतपोघोरंचिदानंदंनिरामयम् ॥ निराहारंजितात्मानंजितक्रो-धंसनातनम् ॥ १३ ॥ लोमशंधर्मतत्त्वज्ञंसर्वशास्त्रविशारदम् ॥ दीर्घायुषंम-हात्मानमनेकब्रह्मसंमितम् ॥ १४ ॥ कल्पेगतेयस्यएकमेकंलोमविशीर्यते ॥

अतोलोमशनामानंत्रिकालज्ञंमहामुनिम् ॥ १५ ॥ तंदृष्ट्वाहर्षिताःसर्वेआज-
ग्मुस्तस्यसन्निधिम् ॥ यथान्यायंयथार्हंतेनमश्चक्रुर्यथोदितम् ॥ १६ ॥ विन-
याऽवनताःसर्वेऊचुश्चैवपरस्परम् ॥ अस्मद्भाग्यवशादेवप्राप्तोऽयंमुनिसत्तमः ॥
॥ १७ ॥ तांस्तथाप्रणतान्दृष्ट्वाहय्युवाचमुनिसत्तमः ॥ ॥ लोमशउवाच ॥
॥ किमर्थमिहसंप्राप्ताःकथयध्वंसकारणं ॥ १८ ॥ मद्दर्शनाह्लादगिरःस्तुवंत
इवमांकिमु ॥ असंशयंकरिष्यामिभवतांयद्धितंभवेत् ॥ १९ ॥ परोपकृतये
जन्ममादृशानांनसंशयः ॥ ॥ जनाऊचुः ॥ ॥ श्रूयतामभिधास्यामोवय-
मागमकारणम् ॥ २० ॥ संशयच्छेदनार्थायतवसन्निधिमागताः ॥ पद्मयोनेः
परतरस्त्वत्तःश्रेष्ठोनविद्यते ॥ २१ ॥ अतःकार्यवशात्प्राप्ताःसमीपंभवतोवय-

म् ॥ महीजिन्नामराजाऽसौपुत्रहीनोऽस्तिसांप्रतम् ॥ २२ ॥ वयंतस्यप्रजाब्र-
ह्मन्पुत्रवत्तेनपालिताः ॥ तंपुत्ररहितंदृष्ट्वातस्यदुःखेनदुःखिताः ॥२३॥ तपःकर्तु-
मिहायातामतिंकृत्वातुनैष्ठिकीम् ॥ तस्यभाग्यवशाद्दृष्टस्त्वमस्माभिर्द्विजोत्तम॥
॥ २४ ॥ महतांदर्शनेनैवकार्यसिद्धिर्भवेन्नृणाम् ॥ उपदेशंवदमुनेराज्ञःपुत्रोय-
थाभवेत् ॥ २५ ॥ इतितेषांवचःश्रुत्वामुहूर्तंध्यानमास्थितः ॥ प्रत्युवाचमु-
निर्ज्ञात्वातस्यजन्मपुरातनम् ॥ २६ ॥ ॥ लोमशउवाच ॥ ॥ पूर्वंजन्म-
निवैश्योऽयंधनहीनोनृशंसकृत् ॥ वाणिज्यकर्मनिरतोग्रामाद्ग्रामांतरंभ्रमन् ॥
२७ ॥ ज्येष्ठमासिसितेपक्षेद्वादशीदिवसेतथा ॥ मध्याह्नेद्युमणौप्राप्तेग्रामसी-
म्निजलाशयम् ॥ २८ ॥ कूपिकांसजलांदृष्ट्वाजलपानेमनोदधौ ॥ सद्यःसूता

सवत्साचधेनुस्तत्रसमागता ॥ २९ ॥ तृषातुरानिदाघार्तातस्यामापःपपौतु
सा ॥ पिबंतींवारयित्वातामसौतोयंस्वयंपपौ ॥ ३० ॥ कर्मणस्तस्यपापेनस
पुत्ररहितोनृपः ॥ पूर्वजन्मकृतात्पुण्यात्प्राप्तंराज्यमकंटकम् ॥ ३१ ॥ ॥ ज-
नाऊचुः ॥ ॥ पुण्यात्पापंक्षयंयातिपुराणेश्रूयतेमुने ॥ पुण्योपदेशंकथयये-
नपापक्षयोभवेत् ॥ ३२ ॥ यथाभवत्प्रसादेनपुत्रोऽस्यभवितातथा ॥ ॥लो-
मशउवाच ॥ ॥ श्रावणेशुक्लपक्षेतुपुत्रदानामविश्रुता ॥ ३३ ॥ एकादशी
तिथिश्चास्तिकुरुध्वंतद्व्रतंजनाः ॥ यथाविधियथान्यायंयथोक्तंजागरान्वितं ॥
३४ ॥ तस्याःपुण्यंसुविमलंददंतुनृपतेर्जनाः ॥ एवंकृतेसुनियतंराज्ञःपुत्रोभ-
विष्यति ॥ श्रुत्वैतल्लोमशवचस्तंप्रणम्यद्विजोत्तमम् ॥ ३५ ॥ प्रजग्मुःस्वगृहा-

न्सर्वेहर्षोत्फुल्लविलोचनाः ॥ श्रावणंतुसमासाद्यश्रुत्वालोमशभाषितम् ॥३६॥
राज्ञासहव्रतंचक्रुःसर्वेश्रद्धासमन्विताः ॥ द्वादशीदिवसेपुण्यंददुर्नृपतयेजनाः॥
३७ ॥ दत्तेपुण्येयथाराज्ञीगर्भमाधत्तशोभनम् ॥ प्राप्तेप्रसवकालेसासुषुवेपुत्र-
मूर्जितम् ॥ ३८ ॥ एवमेषानृपश्रेष्ठपुत्रदानाम्नविश्रुता ॥ कर्त्तव्यासुखमिच्छ-
द्भिरिहलोकेपरत्रच ॥ ३९ ॥ श्रुत्वामाहात्म्यमेतस्याःसर्वपापैःप्रमुच्यते ॥ इ-
हपुत्रसुखंप्राप्यपरत्रस्वर्गगतिर्भवेत् ॥ ४० ॥ इतिश्रीभविष्योत्तरपुराणेश्राव-
णशुक्लैकादशीपुत्रदामाहात्म्यंसमाप्तम् ॥ ॥ अथभाद्रपदकृष्णैकादशीकथा॥
॥ युधिष्ठिरउवाच ॥ ॥ भाद्रस्यकृष्णपक्षेतुकिंनामैकादशीभवेत् ॥ एतदि-
च्छाम्यहंश्रोतुंकथयस्वजनार्दन ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृणु-

ष्वैकमनाराजन्कथयिष्यामिविस्तरात् ॥ अजानाम्नीतिविख्यातासर्वपाप-
प्रणाशिनी ॥ २ ॥ पूजयित्वाहृषीकेशंव्रतंतस्याःकरोतियः ॥ पापानितस्य
नश्यंतिव्रतस्यश्रवणादपि ॥ ३ ॥ नातःपरतराराजँल्लोकद्वयहितावहा ॥ स-
त्यमुक्तंमयाह्येतन्नासत्यंभाषितंमम ॥ ४ ॥ हरिश्चंद्रइतिख्यातोबभूवनृपतिः
पुरा ॥ चक्रवर्तीसत्यसंधःसमस्तायाभुवःपतिः ॥ ५ ॥ तस्यापिकर्मणोयोगा-
द्राज्यभ्रष्टोबभूवसः ॥ विक्रीत्यावनितांपुत्रंसचकारात्मविक्रयम् ॥ ६ ॥ पुल्क-
सस्यचदासत्वंगतोराजासपुण्यकृत् ॥ सत्यमालंब्यराजेंद्रमृतचैलापहारकः ॥
७ ॥ सोऽभवन्नृपतिश्रेष्ठोनसत्याच्चलितस्तथा ॥ एवंगतस्यनृपतेर्बहवोवत्सरा
गताः ॥ ८ ॥ ततश्चिंतापरोराजाबभूवात्यंतदुःखितः ॥ किंकरोमिक्वगच्छा-

मिनिष्कृतिर्मेकथंभवेत् ॥ ९ ॥ इतिचिंतयतस्तस्यमग्नस्यवृजिनार्णवे ॥ आ-
जगाममुनिःकश्चिज्ज्ञात्वाराजानमातुरम् ॥ १० ॥ परोपकरणार्थायनिर्मितो
ब्रह्मणाद्विजः ॥ सतंदृष्ट्वाद्विजवरंननामनृपसत्तमः ॥ ११ ॥ कृतांजलिपुटोभू-
त्वागौतमस्याग्रतःस्थितः ॥ कथयामासवृत्तांतमात्मनोदुःखसंयुतम् ॥ १२ ॥
श्रुत्वानृपतिवाक्यानिगौतमोविस्मयान्वितः ॥ उपदेशंनृपतयेव्रतस्यास्यमु-
निर्ददौ ॥ १३ ॥ मासिभाद्रपदेराजन्कृष्णपक्षेतुशोभना ॥ एकादशीसमाया-
ताअजानाम्न्यतिपुण्यदा ॥ १४ ॥ तस्याःकुरुव्रतंराजन्पापनाशोभविष्य-
ति ॥ तवभाग्यवशादेषासप्तमेऽह्निसमागता ॥ १५ ॥ उपवासपरोभूत्वारात्रौ
जागरणंकुरु ॥ एवंतस्याव्रतेचीर्णेसर्वपापक्षयोभवेत् ॥ १६ ॥ तवपुण्यप्रभा-

वेणचागतोऽहंनृपोत्तम ॥ इत्येवंकथयित्वातुमुनिरंतरधीयत ॥ १७ ॥ मुनि-
वाक्यंनृपःश्रुत्वाचकारव्रतमुत्तमम् ॥ कृतेतस्मिन्व्रतेराज्ञःपापस्यांतोऽभवत्क्ष-
णात् ॥ १८ ॥ श्रूयतांराजशार्दूलप्रभावोऽस्यव्रतस्यच ॥ यद्दुःखंबहुभिर्वर्षै-
र्भोक्तव्यंतत्क्षयोभवेत् ॥ १९ ॥ निस्तीर्णदुःखोराजासीद्व्रतस्यास्यप्रभावतः ॥
पत्न्यासहसमायोगंपुत्रजीवनमापसः ॥ २० ॥ देवदुंदुभयोनेदुःपुष्पवर्षमभू-
द्दिवः ॥ एकादश्याःप्रभावेणप्राप्तंराज्यमकंटकम् ॥ २१ ॥ स्वर्गंलेभेहरिश्चंद्रः
सपुरःसपरिच्छदः ॥ ईदृग्विधंव्रतंराजन्येकुर्वंतिद्विजोत्तमाः ॥ २२ ॥ सर्वपाप-
विनिर्मुक्तास्त्रिदिवंयांतितेध्रुवम् ॥ पठनाच्छ्रवणाद्राजन्नश्वमेधफलंलभेत् ॥
॥ २३ ॥ ॥ इतिश्रीब्रह्मवैवर्तपुराणेभाद्रपदकृष्णअजानामैकादशीमा-

हात्म्यंसमाप्तम् ॥ ॥ अथभाद्रपदशुक्लैकादशीकथा ॥ ॥युधिष्ठिरउवाच॥
नभस्यसितपक्षेतुकिंनामैकादशीभवेत् ॥ कोदेवःकोविधिस्तस्याःकिंपुण्यंचव-
दस्वनः ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ कथयामिमहापुण्यांस्वर्गमोक्ष-
प्रदायिनीम् ॥ वामनैकादशींराजन्सर्वपापहरांपराम् ॥ २ ॥ इमामेवजयं-
त्याख्यांप्राहुरेकादशींनृप ॥ यस्याःश्रवणमात्रेणसर्वपापक्षयोभवेत् ॥ ३ ॥
वाजपेयफलंप्रोक्तंनातःपरतरंनृणाम् ॥ पापिनांपापशमनंजयंतीव्रतमुत्तमम् ॥
४ ॥ नातःपरतराराजन्नवैमोक्षप्रदायिनी ॥ एतस्मात्कारणाद्राजन्कर्त्तव्याग-
तिमिच्छता ॥ ५ ॥ वैष्णवैर्ममभक्तैस्तुमनुजैर्मत्परायणैः ॥ नभस्येवामनोयै-
स्तुपूजितस्तैर्जगत्त्रयम् ॥ ६ ॥ पूजितंनात्रसंदेहस्तेयांतिहरिसान्निधिम् ॥ वा-

मनःपूजितोयेनकमलैःकमलेक्षणः ॥ ७ ॥ नभस्यसितपक्षेतुजयंत्येकादशी-
दिने ॥ तेनार्चितंजगत्सर्वंत्रयोदेवाःसनातनाः ॥ ८ ॥ एतस्मात्कारणाद्राज-
न्कर्तव्योहरिवासरः ॥ अस्मिन्कृतेनकर्तव्यंकिंचिदस्तिजगत्त्रये ॥ ९ ॥ अ-
स्यांप्रसुप्तोभगवानेत्यंगपरिवर्तनम् ॥ तस्मादेनांजनाःसर्वेवदंतिपरिवर्तिनी-
म् ॥ १० ॥ ॥ युधिष्ठिरउवाच ॥ ॥ संशयोऽस्तिमहान्मह्यंश्रूयतांचज-
नार्दन ॥ कथंसुप्तोऽसिदेवेशकथंयास्यंगवर्तनम् ॥ ११ ॥ किमर्थंदेवदेवेशब-
लिर्बद्धस्त्वयाऽसुरः ॥ संतुष्टाःपृथिवीदेवाःकिमकुर्वन्जनार्दन ॥ १२ ॥ को
विधिःकिंव्रतंचैवचातुर्मास्यमुपासताम् ॥ त्वयिसुप्तेजगन्नाथकिंकुर्वंतिजनाः
प्रभो ॥ १३ ॥ एतद्विस्तरतोब्रूहिसंशयंहरमेप्रभो ॥ ॥ श्रीकृष्णउवाच ॥

॥ शृणुष्वराजशार्दूलकथांपापहरांपरां ॥ १४ ॥ बलिर्वैदानवःपूर्वमासीत्त्रेता-
युगेनृप ॥ अपूजयंश्चमांनित्यंमद्भक्तोमत्परायणः ॥ १५ ॥ जपैस्तुविविधैः
सूक्तैर्यजतेमांसनित्यशः ॥ द्विजानांपूजकोनित्यंयज्ञकर्मकृताशयः ॥ १६ ॥
कथंचिदकृतद्वेषीदेवलोकमजीजयत् ॥ मद्दत्तामिहलोकंवैजितंतेनमहात्मना ॥
१७ ॥ विलोक्यचततःसर्वेदेवाःसंहत्यमंत्रयन् ॥ सर्वैर्मिलित्वागंतव्यंदेवंवि-
ज्ञापितुंप्रभुम् ॥ १८ ॥ ॥ततश्चदेवऋषिभिःसाकमिंद्रोगतःप्रभुम् ॥ शिरसाह्य-
वनींगत्वास्तुतइंद्रेणसूक्तिभिः ॥ १९ ॥ गुरुणादेवतैःसार्धंबहुधापूजितोह्यह-
म् ॥ ततोवामनरूपेणह्यवतीर्णश्चपंचमे ॥ २० ॥ अत्युग्ररूपेणतदासर्वब्रह्मां-
डरूपिणा ॥ बालकेनजितोऽसौवैसत्यमालंब्यतस्थिवान् ॥ २१ ॥ ॥ युधि-

ष्ठिरउवाच ॥ ॥ त्वयावामनरूपेणसोऽसुरश्चजितःकथम् ॥ एतत्कथयदेवे-
शमह्यंभक्तायविस्तरात् ॥ २२ ॥ ॥ श्रीकृष्णउवाच ॥ ॥मयाऽलीकेनस-
बलिःप्रार्थितोबटुरूपिणा ॥ पदत्रयमितांभूमिंदेहिमेभुवनत्रयम् ॥ २३ ॥ द-
त्तंभवतितेराजन्नात्रकार्याविचारणा ॥ इत्युक्तश्चमयाराजादत्तवांस्त्रिपदांभुवम्॥
॥ २४ ॥ संकल्पमात्राद्ववृधेदेहस्त्रैविक्रमःपरम् ॥ भूर्लोकेतुकृतौपादौभुवर्लोके
तुजानुनी ॥ २५ ॥ स्वर्लोकेतुकटिंन्यस्यमहर्लोकेतथोदरम् ॥ जनलोकेतुहृ-
दयंतपोलोकेचकंठकम् ॥ २६ ॥ सत्यलोकेमुखंस्थाप्यउत्तमांगंतथोर्ध्वतः ॥
चंद्रसूर्यग्रहाश्चैवभगणोयोगसंयुतः ॥ २७ ॥ सेंद्राश्चैवतदादेवानागाःशेषाद-
यःपरे ॥ स्तुवंतोवेदसंभूतैःसूक्तैश्चविविधैस्तुमाम् ॥ २८ ॥ करेगृहीत्वातु

बलिमब्रुवंवचनंतदा ॥ एकेनपूरितापृथ्वीद्वितीयेनत्रिविष्टपम् ॥ २९ ॥ तृ-
तीयस्यतुपादस्यस्थानंदेहिममानघ ॥ एवमुक्तेमयासोपिमस्तकंदत्तवान्बलिः॥
॥ ३० ॥ ततोवैमस्तकेह्येकंपदंदत्तंमयातदा ॥ क्षिप्तोरसातलेराजन्दानवो
ममपूजकः ॥ ३१ ॥ विनयावनतंदृष्ट्वाप्रसन्नोऽस्मिजनार्दनः ॥ बलेवसामिस-
ततंसन्निधौतवमानद ॥ ३२ ॥ इत्यवोचंमहाभागंबलिंवैरोचनिंतदा ॥ न-
भस्यशुक्लपक्षेतुपरिवर्तिनिवासरे ॥ ३३ ॥ ममैकातत्रमूर्तिश्चबलिमाश्रित्य
तिष्ठति ॥ द्वितीयाशेषपृष्ठेवैक्षीराब्धौसागरोत्तमे ॥ ३४ ॥ सुप्यतेचहृषीकेशो
यावच्चायातिकार्तिकी ॥ तावद्भवतितत्पुण्यंसर्वपुण्योत्तमोत्तमं ॥ ३५ ॥ ए-
तस्मात्कारणाद्राजन्कर्तव्यैषाप्रयत्नतः ॥ एकादशीमहापुण्यापवित्रापापहा-

रिणी ॥ ३६ ॥ अस्यांप्रसुप्तोभगवानेत्यंगपरिवर्तनम् ॥ एतस्यांपूजयेद्देवंत्रै-
लोक्यस्यापितामहम् ॥ ३७ ॥ दधिदानंप्रकर्तव्यंरौप्यतंडुलसंयुतम् ॥ रात्रौ
जागरणंकृत्वामुक्तोभवतिमानवः ॥ ३८ ॥ एवंयःकुरुतेराजन्नेकादश्याव्रतंशु-
भम् ॥ सर्वपापहरंचैवभुक्तिमुक्तिप्रदायकम् ॥ ३९ ॥ सदेवलोकंसंप्राप्यभ्राज-
तेचंद्रमायथा ॥शृणुयाच्चैवयोमर्त्यःकथांपापहरांपराम्॥अश्वमेधसहस्रस्यफ-
लंप्राप्नोतिमानवः ॥ ४० ॥ ॥ इतिश्रीस्कंदपुराणेभाद्रपदशुक्लपरिवर्ति-
नीनामैकादशीमाहात्म्यंसमाप्तम् ॥ ॥ अथाश्विनकृष्णैकादशीकथा ॥
॥ युधिष्ठिरउवाच ॥ ॥ कथयस्वप्रसादेनममाग्रेमधुसूदन ॥ आश्विनेकृष्ण-
पक्षेतुकिंनामैकादशीभवेत् ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ आश्विनस्या-

सितेपक्षेइंदिरानामनामतः ॥ तस्याव्रतप्रभावेणमहापापंप्रणश्यति ॥ २ ॥
अधोयोनिगतानांचपितॄणांगतिदायिनी ॥ शृणुष्वावहितोराजन्कथांपापह-
रांपराम् ॥ ३ ॥ यस्याःश्रवणमात्रेणवाजपेयफलंलभेत् ॥ पुराकृतयुगेराजा
बभूवरिपुसूदनः ॥ ४ ॥ इंद्रसेनइतिख्यातःपुरींमाहिष्मतींप्रति ॥ सराज्यं
पालयामासधर्मेणयशसाऽन्वितः ॥ ५ ॥ पुत्रपौत्रसमायुक्तोधनधान्यसमन्वि-
तः ॥ माहिष्मत्यधिपोराजाविष्णुभक्तिपरायणः ॥ ६ ॥ जपन्गोविंदनामा-
निमुक्तिदानिनराधिपः ॥ कालंनयतिविधिवदध्यात्मस्यविचिंतकः ॥ ७ ॥
एकस्मिन्दिवसेराज्ञिसुखासीनेसदोगते ॥ अवतीर्यागमद्धीमानंबरान्नारदोमु-
निः ॥ ८ ॥ तमागतमभिप्रेक्ष्यप्रत्युत्थायकृतांजलिः ॥ पूजयित्वाऽर्घविधिना

चासनेसंन्यवेशयत् ॥ ९ ॥ सुखोपविष्टःसमुनिःप्रत्युवाचनृपोत्तमम् ॥ कुश-
लंतवराजेंद्रसप्तस्वंगेषुवर्तते ॥ १० ॥ धर्मेमतिर्वर्तंतेतेविष्णुभक्तिरतिस्तथा ॥
इतिवाक्यंतुदेवर्षेःश्रुत्वाराजातमब्रवीत् ॥ ११ ॥ ॥ राजोवाच ॥ ॥ त्व-
त्प्रसादान्मुनिश्रेष्ठसर्वत्रकुशलंमम ॥ अद्यक्रतुक्रियाःसर्वाःसफलास्तवदर्शना-
त् ॥ १२ ॥ प्रसादंकुरुविप्रर्षेब्रूह्यागमनकारणम् ॥ इतिराज्ञोवचःश्रुत्वादेव-
र्षिर्वाक्यमब्रवीत् ॥ १३ ॥ ॥ नारदउवाच ॥ ॥ श्रूयतांराजशार्दूलमद्व-
चोविस्मयप्रदम् ॥ ब्रह्मलोकादहंप्राप्तोयमलोकंद्विजोत्तम ॥ १४ ॥ शमनेना-
र्चितोभक्त्याउपविष्टोवरासने ॥ धर्मशीलःसत्यवांस्तुभास्करींसमुपासते ॥
॥ १५ ॥ बहुपुण्यप्रकर्ताचव्रतवैकल्यदोषतः ॥ सभायांश्राद्धदेवस्यमयादृष्टः

पितातव ॥ १६ ॥ कथितस्तेनसंदेशस्तंनिबोधजनेश्वर ॥ इंद्रसेनइतिख्या-
तोराजामाहिष्मतीप्रभुः ॥ १७ ॥ तस्याग्रेकथयब्रह्मन्स्थितंमांयमसन्निधौ ॥
केनापिचांतरायेणपूर्वजन्मोद्भवेनवै ॥ १८ ॥ स्वर्गंप्रेषयमांपुत्रइंदिराव्रतदान-
तः ॥ इत्युक्तोऽहंसमायातःसमीपंतवपार्थिव ॥ १९ ॥ पितुःस्वर्गतयेराजन्निं-
दिराव्रतमाचर ॥ तेनव्रतप्रभावेणस्वर्गंयास्यतितेपिता ॥ २० ॥ ॥ राजो-
वाच ॥ ॥ कथयस्वप्रसादेनभगवन्निंदिराव्रतम् ॥ विधिनाकेनकर्तव्यंकस्मि-
न्पक्षेतिथौतथा ॥ २१ ॥ ॥ नारदउवाच ॥ ॥ शृणुराजन्हितंवच्मिव्रत-
स्यास्यविधिंशुभम् ॥ आश्विनस्यासितेपक्षेदशमीदिवसेशुभे ॥ २२ ॥ प्रातः
स्नानंप्रकुर्वीतश्रद्धायुक्तेनचेतसा ॥ ततोमध्याह्नसमयेस्नानंकृत्वाबहिर्जले ॥

२३ ॥ पितॄणांप्रीतयेश्राद्धंकुर्याच्छ्रद्धासमन्वितः ॥ एकभक्तंततःकृत्वारात्रौभू-
मौशयीतच ॥ २४ ॥ प्रभातेविमलेजातेप्राप्तेचैकादशीदिने ॥ मुखप्रक्षालनं
कुर्याद्दंतधावनपूर्वकम् ॥ २५ ॥ उपवासस्यनियमंगृह्णीयाद्भक्तिभावतः ॥ अ-
द्यस्थित्वानिराहारःसर्वभोगविवर्जितः ॥ २६ ॥ श्वोभोक्ष्येपुंडरीकाक्षशरणंमे-
भवाच्युत ॥ इत्येवंनियमंकृत्वामध्याह्नसमयेतथा ॥ २७ ॥ शालग्रामशिला-
ग्रेतुश्राद्धंकृत्वायथाविधि ॥ भोजयित्वाद्विजान्शुद्धान्दक्षिणाभिःसुपूजितान् ॥
२८ ॥ पितृशेषंसमाघ्रायगवेदद्याद्विचक्षणः ॥ पूजयित्वाहृषीकेशंधूपगंधादि-
भिस्तथा ॥ २९ ॥ रात्रौजागरणंकुर्यात्केशवस्यसमीपतः ॥ ततःप्रभातसमये
संप्राप्तेद्वादशीदिने ॥ ३० ॥ अर्चयित्वाहरिंभक्त्याभोजयित्वाद्विजानथ ॥ बं-

धुदौहित्रपुत्राद्यैःस्वयंभुंजीतवाग्यतः ॥ ३१ ॥ अनेनविधिनाराजन्कुरुव्रतम-
तंद्रितः ॥ विष्णुलोकंप्रयास्यंतिपितरस्तवभूपते ॥ ३२ ॥ इत्युक्त्वानृपतिं
राजन्मुनिरंतरधीयत ॥ यथोक्तविधिनाराजाचकारव्रतमुत्तमम् ॥३३॥ अंतः-
पुरेणसहितःपुत्रभृत्यसमन्वितः ॥ कृतेव्रतेतुकौंतेयपुष्पवृष्टिरभूद्दिवः ॥ ३४ ॥
तत्पितागरुडारूढोजगामहरिमंदिरम् ॥ इंद्रसेनोऽपिराजर्षिःकृत्वाराज्यमकंट-
कम् ॥ ३५ ॥ राज्येनिवेश्यतनयंजगामात्रिदिवंस्वयम् ॥ इंदिराव्रतमाहात्म्यं
तवाग्रेकथितंमया ॥ ३६ ॥ पठनाच्छ्रवणाच्चास्यसर्वपापैःप्रमुच्यते ॥ भुक्त्वे-
हानिखिलान्भोगान्विष्णुलोकेवसेच्चिरम् ॥ ३७ ॥ ॥ इतिश्रीब्रह्मवैवर्तपु-
राणेआश्विनकृष्णैकादशीइंदिरामाहात्म्यंसमाप्तम् ॥ ॥ अथाश्विनशुक्लैका-

दशीकथा ॥ ॥ युधिष्ठिरउवाच ॥ ॥ कथयस्वप्रसादेनभगवन्मधुसूदन ॥
इषस्यशुक्लपक्षेतुकिंनामैकादशीभवेत् ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥शृ-
णुराजेंद्रवक्ष्यामिमाहात्म्यंपापनाशनम् ॥ शुक्लपक्षेचाश्वयुजिभवेदेकादशीतु-
या ॥ २ ॥ पाशांकुशेतिविख्यातासर्वपापहरापरा ॥ पद्मनाभाभिधानंतुपूज-
येत्तत्रमानवः ॥ ३ ॥ सर्वाभीष्टफलप्राप्त्यैस्वर्गमोक्षप्रदंनृणाम् ॥ तपस्तप्त्वा
नरस्तीव्रंचिरंसुनियतेंद्रियः ॥ ४ ॥ यत्फलंसमवाप्नोतितन्नत्वागरुडध्वजम् ॥
कृत्वापिबहुशःपापंनरोमोहसमन्वितः ॥ ५ ॥ नयातिनरकंघोरंनत्वापापहरं
हरिम् ॥ पृथिव्यांयानितीर्थानिपुण्यान्यायतनानिच ॥ ६ ॥ तानिसर्वाण्यवा-
प्नोतिविष्णोर्नामानुकीर्तनात् ॥ देवंशार्ङ्गधरंविष्णुंयेप्रपन्नाजनार्दनम् ॥ ७ ॥

नतेषांयमलोकश्चनृणांवैजायतेक्वचित् ॥ उपोष्यैकादशीमेकांप्रसंगेनापिमान-
वाः ॥ ८ ॥ नयांतियातनांयाम्यांपापपंकृत्वातुदारुणम् ॥ वैष्णवःपुरुषोभूत्वा
शिवनिंदांकरोतियः ॥ ९ ॥ योनिंदेद्वैष्णवंलोकेसयातिनरकंध्रुवम् ॥ अश्वमे-
धसहस्राणिराजसूयशतानिच ॥ १० ॥ एकादश्युपवासस्यकलांनार्हंतिषो-
डशीम् ॥ एकादशीसमंपुण्यंकिंचिल्लोकेनविद्यते ॥ ११ ॥ नेदृशंपावनंकिंचि-
त्रिषुलोकेषुविद्यते ॥ यादृशंपद्मनाभस्यदिनंपातकहानिदम् ॥ १२ ॥ यावन्नो-
पोष्यतेजंतुःपद्मनाभदिनंशुभम् ॥ व्याजेनापिकृतंराजन्नदर्शयतिभास्करीम् ॥
१३ ॥ स्वर्गमोक्षप्रदाह्येषाशरीरारोग्यदायिनी ॥ सुकलत्रप्रदाह्येषाधनधान्य-
प्रदायिनी ॥ १४ ॥ नगंगानगयाराजन्नकाशीनचपुष्करम् ॥ नचापिकौरवं

क्षेत्रंपुण्यंभूपहरेर्दिनात् ॥ १५ ॥ रात्रौजागरणंकृत्वासमुपोष्यहरेर्दिनम् ॥
अनायासेनभूपालप्राप्यतेवैष्णवंपदम् ॥ १६ ॥ दशवैमातृकेपक्षेदशराजेंद्रपै-
तृके ॥ प्रियायादशपक्षेतुपुरुषानुद्धरेन्नरः ॥ १७ ॥ चतुर्भुजादिव्यरूपानागा-
रिकृतकेतनाः ॥ स्रग्विणःपीतवस्त्राश्चप्रयांतिहरिमंदिरम् ॥ १८ ॥ बालत्वे
यौवनेचापिवृद्धत्वेपिनृपोत्तम॥उपोष्यद्वादशींनूनंनैतिपापोऽपिदुर्गतिम् ॥१९॥
पाशांकुशामुपोष्यैवआश्विनेचासितेतरे ॥ सर्वपापविनिर्मुक्तोहरिलोकंसग-
च्छति ॥ २० ॥ दत्वाहेमतिलान्भूमिंगामन्नमुदकंतथा ॥ उपानद्वस्त्रच्छत्रादि
नपश्यतियमंनरः ॥ २१ ॥ यस्यपुण्यविहीनानिदिनान्यपगतानिच ॥ सलो-
हकारभस्त्रेवश्वसन्नपिनजीवति ॥ २२ ॥ अवंध्यंदिवसंकुर्याद्दरिद्रोऽपिनृपोत्तम॥

समाचरन्यथाशक्तिस्नानदानादिकाःक्रियाः ॥ २३ ॥ तडागारामसौधानांस-
त्राणांपुण्यकर्मणाम् ॥ कर्तारोनैवपश्यंतिधीरास्तांयमयातनाम् ॥ २४ ॥ दी-
र्घायुषोधनाढ्याश्चकुलीनारोगवर्जिताः ॥ दृश्यंतेमानवालोकेपुण्यकर्तारईदृ-
शाः ॥ २५ ॥ किमत्रबहुनोक्तेनयांत्यधर्मेणदुर्गतिम् ॥ आरोहंतिदिवंधर्मैर्ना-
त्रकार्याविचारणा ॥ २६ ॥ इतितेकथितंराजन्यत्पृष्टोऽहंत्वयाऽनघ ॥
पाशांकुशायामाहात्म्यंकिमन्यच्छ्रोतुमिच्छसि ॥ २७ ॥ ॥ इतिश्रीब्रह्मां-
डपुराणेआश्विनशुक्लैकादशीपाशांकुशामाहात्म्यंसमाप्तम् ॥ ॥ अथकार्ति-
ककृष्णैकादशीकथा ॥ ॥ युधिष्ठिरउवाच ॥ ॥ कथयस्वप्रसादे-
नममस्नेहाज्जनार्दन ॥ कार्तिकस्यासितेपक्षेकिंनामैकादशीभवेत् ॥ १ ॥

॥ श्रीकृष्णउवाच ॥ ॥ श्रूयतांराजशार्दूलकथयामितवाग्रतः ॥ कार्तिके
कृष्णपक्षेतुरमानाम्नीसुशोभना ॥ २ ॥ एकादशीसमाख्यातामहापापहराप-
रा ॥ अस्याःप्रसंगतोराजन्माहात्म्यंप्रवदामिते ॥ ३ ॥ मुचुकुंदइतिख्यातो
बभूवनृपतिःपुरा ॥ देवेंद्रेणसमंयस्यामित्रत्वमभवन्नृप ॥ ४ ॥ यमेनवरुणेनैव
कुबेरेणसमंतथा॥ विभीषणेनचैतस्यसखित्वमभवत्सह ॥ ५ ॥ विष्णुभक्तः
सत्यसंधोबभूवनृपतिःसदा ॥ तस्यैवंशासतोराजन्राज्यंनिहतकंटकं ॥ ६ ॥
बभूवदूहितागेहेचंद्रभागासरिद्वरा ॥ शोभनायचसादत्ताचंद्रसेनसुतायवै ॥
७ ॥ सकदाचित्समायातः श्वशुरस्यगृहेनृप ॥ एकादशीव्रतमिदंसमायातंसु-
पुण्यदम् ॥ ८ ॥ समागतेव्रतदिनेचंद्रभागात्वचिंतयत् ॥ किंभविष्यतिदेवे-

शमसमभर्तापिऽदुर्बलः ॥ ९ ॥ क्षुधांनसहतेसोढुंपिताचैवोग्रशासनः ॥ पटह-
स्ताड्यतेयस्यसंप्राप्तेदशमीदिने ॥ १० ॥ नभोक्तव्यंनभोक्तव्यंनभोक्तव्यंहरे-
र्दिने ॥ श्रुत्वापटहनिर्घोषंशोभनस्त्वब्रवीत्प्रियाम् ॥ ११ ॥ किंकर्तव्यंमया
कांतेदेहिभिक्षांसुशोभने ॥ कृतेनयेनमेसम्यक्जीवितंनविनश्यति ॥ १२ ॥
॥ चंद्रभागोवाच ॥ ॥ मत्पितुर्वेश्मनिविभोभोक्तव्यंनापिकेनचित् ॥ गजैर-
श्वैस्तथाचोष्ट्रैरन्यैःपशुभिरेवच ॥ १३ ॥ तृणमन्नंतथावारिनभोक्तव्यंहरेर्दिने॥
मानवैश्चकुतःकांतभुज्यतेहरिवासरे ॥ १४ ॥ यदित्वंभोक्ष्यसेकांततत्तोगेहा-
त्प्रयास्यताम् ॥ एवंविचार्यमनसासुदृढंमानसंकुरु ॥ १५ ॥ ॥ शोभनउ-
वाच ॥ ॥ सत्यमेतत्त्वयैवोक्तंकरिष्येऽहमुपोषणम् ॥ दैवेनविहितंयद्वैतत्तथैव

भविष्यति ॥ १६ ॥ इतिदिष्टेमतिंकृत्वाचकारव्रतमुत्तमम् ॥ क्षुत्तृषापीडितत-
नुःसबभूवातिदुःखितः॥ १७ ॥ इतिचिंतयतस्तस्यह्यादित्योऽस्तमगाद्गिरिम् ॥
वैष्णवानांनराणांसानिशाहर्षविवर्धिनी ॥ १८ ॥हरिपूजारतानांचजागरास-
क्तचेतसाम् ॥ बभूवनृपशार्दूलशोभनस्यातिदुःसहा ॥ १९ ॥ रवेरुदयवेला-
यांशोभनःपंचतांगतः ॥ दाहयामासराजातंराजयोग्यैश्चदारुभिः ॥ २० ॥
चंद्रभागानात्मदेहंददाहपितृवारिता ॥ कृत्वौर्ध्वदेहिकंतस्यतस्थौजनकवेश्म-
नि ॥ २१ ॥ शोभनेननृपश्रेष्ठरमाव्रतप्रभावतः ॥ प्राप्तंदेवपुरंरम्यंमंदराचल-
सानुनि ॥ २२ ॥ अनुत्तममनाधृष्यमसंख्येयगुणान्वितम् ॥ हेमस्तंभमयैः
सौधैरत्नवैदूर्यमंडितैः ॥ २३ ॥ स्फटिकैर्विविधाकारैर्विचित्रैरुपशोभितम् ॥

सिंहासनसमारूढः सुश्वेतच्छत्रचामरः ॥ २४ ॥ किरीटकुंडलयुतोहारकेयूरभू-
षितः ॥ स्तूयमानश्चगंधर्वैरप्सरोगणसेवितः ॥ २५ ॥ शोभनःशोभतेतत्रदे-
वराडपरोयथा ॥ सोमशर्मेतिविख्यातोमुचुकुंदपुरेवसन् ॥ तीर्थयात्राप्रसंगेन
भ्रमन्विप्रोददर्शतम् ॥ २६ ॥ नृपजामातरंज्ञात्वातत्समीपंजगामसः ॥ आस-
नादुत्थितःशीघ्रंनमश्चक्रेद्विजोत्तमम् ॥ २७ ॥ चकारकुशलप्रश्नंश्वशुरस्यनृप-
स्यच ॥ कांतायाश्चंद्रभागायास्तथैवनगरस्यच ॥ २८ ॥ ॥ सोमशर्मोवा-
च ॥ ॥ कुशलंवर्ततेराजन्श्वशुरस्यगृहेतव ॥ चंद्रभागाकुशलिनीसर्वतः
कुशलंपुरे ॥ २९ ॥ स्ववृत्तंकथ्यतांराजन्आश्चर्यंपरमंमम ॥ पुरंविचित्रंरुचि-
रंनदृष्टंकेनचित्क्वचित् ॥ ३० ॥ एतदाचक्ष्वनृपतेकुतःप्राप्तमिदंत्वया ॥ ॥

॥ शोभनउवाच ॥ ॥ कार्तिकस्यासितेपक्षेनाम्नाचैकादशीरमा ॥ ३१ ॥
तामुपोष्यमयाप्राप्तंद्विजेंद्रपुरमध्रुवम् ॥ ध्रुवंभवतियेनैवतत्कुरुष्वद्विजोत्तम ॥
३२ ॥ ॥द्विजेंद्रउवाच॥ ॥ कथम ुवमेतद्धिकथंहिभवतिध्रुवम् ॥ तत्त्वंकथय-
राजेंद्रतत्करिष्यामिनान्यथा ॥ ३३ ॥ ॥ शोभनउवाच ॥ ॥ मयैतद्विहि-
तंविप्रश्रद्धाहीनंव्रतोत्तमम् ॥ तेनाहमध्रुवंमन्येध्रुवंभवतितच्छृणु ॥३४॥ मुचुकुं
दस्यदुहिताचंद्रभागासुशोभना ॥ तस्यैकथयवृत्तांतंध्रुवमेतद्भविष्यति ॥ ३५ ॥
तच्छ्रुत्वाऽथद्विजवरस्तस्यैसर्वंन्यवेदयत् ॥ श्रुत्वाऽथसाद्विजवचोविस्मयोत्फुल्ल-
लोचना ॥ ३६ ॥ प्रत्यक्षमथवास्वप्नस्त्वयैतत्कथ्यतेद्विज ॥ ॥ सोमशर्मोवा-
च ॥ ॥ प्रत्यक्षंपुत्रितेकांतोमयादृष्टोमहावने ॥ ३७ ॥ देवतुल्यमनाधृष्यं

दृष्टंतस्यपुरंमया ॥ अध्रुवंतेनतत्प्रोक्तंध्रुवंभवतितत्कुरु ॥ ३८ ॥ ॥ चंद्रभा-
गोवाच ॥ ॥ तत्रमांनयविप्रर्षेपतिदर्शनलालसाम् ॥ आत्मनोव्रतपुण्येन
करिष्यामिपुरंध्रुवम् ॥ ३९ ॥ आवयोर्द्विजसंयोगोयथाभवतितत्कुरु ॥ प्रा-
प्यतेहिमहत्पुण्यंकृत्वायोगंविमुक्तये ॥ ४० ॥ इतिश्रुत्वासहतयासोमशर्मा
जगामह ॥ आश्रमंवामदेवस्यमंदराचलसन्निधौ ॥ ४१ ॥ वामदेवोऽशृणो-
त्सर्वंवृत्तांतंकथितंतयोः ॥ अभ्यषिंचच्चंद्रभागांवेदमंत्रैरथोज्ज्वलाम् ॥ ४२ ॥
ऋषिमंत्रप्रभावेणविष्णुवासरसेवनात् ॥ दिव्यदेहाबभूवासौदिव्यांगतिमवा-
पह ॥ ४३ ॥ पत्युःसमीपमगमत्प्रहर्षोत्फुल्ललोचना ॥ सहर्षःशोभनोऽतीवदृ-
ष्ट्वाकांतांसमागताम् ॥ ४४ ॥ समाहूयस्वकेवामेपार्श्वेतांसंन्यवेशयत् ॥ सा-

चोवाचप्रियंहर्षाच्चंद्रभागाशुभंवचः ॥४५॥ शृणुकांतहितंवाक्यंयत्पुण्यंविद्यते मयि ॥ अष्टवर्षाधिकाजातायदाऽहंपितृवेश्मनि ॥ ४६ ॥ मयाततःप्रभृतिच कृतमेकादशीव्रतम् ॥ यथोक्तविधिसंयुक्तंश्रद्धायुक्तेनचेतसा ॥ ४७ ॥ तेन पुण्यप्रभावेणभविष्यतिपुरंध्रुवम् ॥ सर्वकामसमृद्धंचयावदाभूतसंप्लवम् ॥४८॥ एवंसानृपशार्दूलरमतेपतिनासह ॥ दिव्यभोगादिव्यरूपादिव्याभरणभूषि-ता ॥ ४९॥ शोभनोऽपितयासार्धंरमतेदिव्यविग्रहः ॥ रमाव्रतप्रभावेणमंदरा-चलसानुनि ॥ ५० ॥ चिंतामणिसमाह्येषाकामधेनुसमाथवा ॥ रमाभिधाना नृपतेतवाग्रेकथितामया ॥ ५१ ॥ ईदृशंचव्रतंराजन्येकुर्वंतिनरोत्तमाः ॥ ब्र-ह्महत्यादिपापानिनाशंयांतिनसंशयः ॥ ५२ ॥ एकादशीव्रतानांचपक्षयोरु-

भयोरपि ॥ यथाशुक्लातथाकृष्णातिथिभेदंनकारयेत् ॥ ५३ ॥ सेवितैकादशी नृणांभुक्तिमुक्तिप्रदायिनी ॥ धेनुःकृष्णातथाश्वेताउभयोःसदृशंपयः ॥ ५४ ॥ तथैवतुल्यफलदंस्मृतमेकादशीव्रतम् ॥ एकादशीव्रतानांचमाहात्म्यंशृणुयान्नरः ॥ ५५ ॥ सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते ॥ ५६ ॥ ॥ इतिश्री ब्रह्मवै० कार्तिककृष्णैकादशीरमामाहात्म्यंसमाप्तम् ॥ ॥ अथकार्तिकशुक्लैकादशीकथा ॥ ॥ ब्रह्मोवाच ॥ ॥ प्रबोधिन्याश्चमाहात्म्यंपापघ्नंपुण्यवर्धनम् ॥ मुक्तिप्रदंसुबुद्धीनांशृणुष्वमुनिसत्तम ॥ १ ॥ तावद्गर्जंतिविप्रेंद्रगंगाभागीरथीक्षितौ ॥ यावन्नायातिपापघ्नीकार्तिकेहरिबोधिनी ॥ २ ॥ तावद्गर्जंतितीर्थानिह्यासमुद्रंसरांसिच ॥ यावत्प्रबोधिनीविष्णोस्तिथिर्नायातिका-

तिंकी ॥ ३ ॥ अश्वमेधसहस्राणिराजसूयशतानिच ॥ एकेनैवोपवासेनप्रबो-
धिन्यांलभेन्नरः ॥ ४ ॥ ॥ नारदउवाच ॥ ॥ एकभुक्तेनकिंपुण्यंकिंपुण्यंन-
क्तभोजने ॥ उपवासेनकिंपुण्यंतन्मेब्रूहिपितामह ॥ ५ ॥ ॥ ब्रह्मोवाच ॥
एकभुक्तेनजन्मोत्थंनक्तेनद्विजनुर्भवम् ॥ सप्तजन्मभवंपापमुपवासेननश्यति ॥
६ ॥ यद्दुर्लभंयदप्राप्यंत्रैलोक्येनतुगोचरम् ॥ यदप्यप्रार्थितंपुत्रददातिहरि-
बोधिनी ॥ ७ ॥ मेरुमंदरमात्राणिपापान्युग्राणियानितु ॥ एकेनैवोपवासेन
दहतेपापहारिणी ॥ ८ ॥ पूर्वजन्मसहस्रैस्तुयदकर्मउपार्जितम् ॥ जागरेण
प्रबोधिन्यांदहतेतूलराशिवत् ॥ ९ ॥ उपवासंप्रबोधिन्यांयःकरोतिस्वभावतः॥
विधिवन्मुनिशार्दूलयथोक्तंलभतेफलम् ॥१०॥ यथोक्तंसुकृतंयस्तुविधिवत्कुरु-

तेनरः ॥ स्वल्पंमुनिवरश्रेष्ठमेरुतुल्यंभवेत्फलम् ॥ ११ ॥ विधिहीनंतुयःकु-
र्यात्सुकृतंमेरुमात्रकम् ॥ अणुमात्रंनचाप्नोतिफलंधर्मस्यनारद ॥ १२ ॥ सं-
ध्याहीनेव्रतभ्रष्टेनास्तिकेहैतुकेशठे ॥ नैतेषांतिष्ठतेदेहेधर्मशास्त्रविदूषके ॥
१३ ॥ परदाररतेमूर्खेकृतघ्नेवंचकेतथा ॥ धर्मोनतिष्ठतेदेहेएतेषामपिदेहिना-
म् ॥ १४ ब्राह्मणोवापिशूद्रोवासेवतेपरयोषितम् ॥ ब्राह्मणींचविशेषेणचांडा-
लसदृशावुभौ ॥ १५ ॥ सभर्तृकांवाविधवांब्राह्मणोब्राह्मणींयदि ॥ सेवतेमुनि-
शार्दूलसान्वयोयातिसंक्षयम् ॥ १६ ॥ परदाराभिगमनंकुरुतेयोद्विजाधमः ॥
संततिर्नभवेत्तस्यफलंजन्मार्जितंनहि ॥ १७ ॥ गुरुणासहविप्रैश्चयोऽहंकारेण
वर्तते ॥ सुकृतान्नश्यतेशीघ्रंधनंनाप्नोतिसंततिम् ॥ १८ ॥ आचारभ्रष्टदेहा-

नांवृषलीगामिनांसुत ॥ यस्तेनसेव्यमानोऽपिधर्मस्तेषांपराङ्मुखः ॥ १९ ॥
पापिनस्तेनरालोकेसंगतिंपतितैःसह ॥ येकुर्वंतिनृपश्रेष्ठतेगच्छंतियमालयं ॥
२० ॥ धर्मोनष्टोनृणांयेषांस्वागतासनभोजनैः ॥ तेषांवैनश्यतेवत्सकीर्तिरा-
युःप्रजाःसुखम् ॥ २१ ॥ साधूनामपमानंतुयेकुर्वंतिनराधमाः ॥ त्रिवर्गफल-
हीनास्तेदह्यंतेनरकाग्निना ॥ २२ ॥ कृत्वाऽवमानंसाधूनांयेहृष्यंतिनराधमाः॥
वारयंतिनयेमूढास्तेपश्यंतिकुलक्षयम् ॥ २३ ॥ आचारभ्रष्टदेहस्यहैतुकस्य
शठस्यच ॥ ददतोजुह्वतोवापिगतिस्तस्यनविद्यते ॥ २४ ॥ तस्मान्नत्वाच-
रेत्किंचिदशुभंलोकगर्हितम् ॥ सदाचारवताभाव्यंयथाधर्मोननश्यति ॥२५॥
येध्यायंतिमनोवृत्त्याकरिष्यामःप्रबोधिनीम् ॥ तेषांविलीयतेपापंपूर्वजन्मशतो-

द्भवम् ॥ २६ ॥ समतीतंभविष्यञ्चवर्तमानंकुलायुतम् ॥ विष्णुलोकंनयत्या-
शुप्रबोधिन्यांतुजागरे ॥ २७ ॥ वसंतिपितरोहृष्टाविष्णुलोकेऽत्यलंकृताः ॥
विमुक्तानारकैर्दुःखैःपूर्वकर्मसमुद्भवैः ॥ २८ ॥ कृत्वातुपातकंघोरंब्रह्महत्या-
दिकंनरः ॥ कृत्वातुजागरंविष्णोर्धौतपापोभवेन्मुने ॥ २९ ॥ दुष्प्राप्यंयत्फ-
लंविप्रैरश्वमेधादिभिर्मखैः ॥ प्राप्यतेतत्सुखेनैवप्रबोधिन्यांतुजागरे ॥ ३० ॥
आप्लुत्यसर्वतीर्थेषुदत्वागाःकांचनंमहीम् ॥ नतत्फलमवाप्नोतियत्कृत्वाजाग-
रंहरेः ॥ ३१ ॥ जातःसएवसुकृतीकुलंतेनैवपावितम् ॥ कार्तिकेमुनिशार्दूल
कृतायेनप्रबोधिनी ॥ ३२ ॥ यथाध्रुवंनृणांमृत्युर्धननाशस्तथाध्रुवम् ॥ इति
ज्ञात्वामुनिश्रेष्ठकर्तव्यंवैष्णवंदिनम् ॥ ३३ ॥ यानिकानिचतीर्थानित्रैलो-

क्येसंभवंतिच ॥ तानितस्यगृहेसम्यग्यःकरोतिप्रबोधिनीम् ॥ ३४ ॥ सर्वकृत्यंपरित्यज्यतुष्ट्यर्थंचक्रपाणिनः ॥ उपोष्यैकादशींरम्यांकार्तिकेहरिबोधिनीम् ॥ ३५ ॥ सज्ञानीसचयोगीचसतपस्वीजितेंद्रियः ॥ भोगोमोक्षश्चतस्यास्तिह्युपास्तेहरिबोधिनीम् ॥ ३६ ॥ विष्णुप्रियतराह्येषाधर्मसारस्यदायिनी ॥ सकृदेनामुपोष्यैवमुक्तिभाक्चभवेन्नरः ॥ ३७ ॥ प्रबोधिनीमुपोषित्वानगर्भेविशतेनरः ॥ सर्वधर्मान्परित्यज्यतस्मात्कुर्वीतनारद ॥ ३८ ॥ कर्मणामनसावाचापापंयत्समुपार्जितम् ॥ तत्क्षालयतिगोविंदःप्रबोधिन्यांतुजागरे ॥ ३९ ॥ स्नानंदानंजपोहोमःसमुद्दिश्यजनार्दनम् ॥ नरैर्यत्क्रियतेवत्सप्रबोधिन्यांतदक्षयम् ॥ ४० ॥ येऽर्चयंतिनरास्तस्यांभक्त्यादेवंचमाधवम् ॥

समुपोष्यप्रमुच्यंतेपापैस्तेशतजन्मभिः॥४१॥ महाव्रतमिदंपुत्रमहापापौघना-
शनम् ॥ प्रबोधवासरंविष्णोर्विधिवत्समुपोषयेत् ॥ ४२ ॥ व्रतेनानेनदेवेशं
परितोष्यजनार्दनम् ॥ विराजयन्दिशःसर्वाःप्रयातिभवनंहरेः ॥ ४३ ॥ कर्त-
व्यैषाप्रयत्नेननरैःकांतिमभीप्सुभिः ॥ द्वादशीद्विपदांश्रेष्ठकार्तिकेतुप्रबोधिनी॥
॥ ४४ ॥ बाल्येयच्चार्जितंवत्सयौवनेवार्धकेतथा ॥ शतजन्मकृतंपापंस्वल्पं
वायदिवाबहु ॥ ४५ ॥ शुष्कमार्द्रंमुनिश्रेष्ठस्वगुह्यमपिनारद ॥ तत्क्षालयति
गोविंदोह्यमामभ्यर्च्यभक्तितः ॥ ४६ ॥ धनधान्यवहापुण्यासर्वपापहरापरा ॥
तामुपोष्यहरेर्भक्त्यादुर्लभंनभवेत्क्वचित् ॥ ४७॥ चंद्रसूर्योपरागेचयत्फलंपरि-
कीर्तितम् ॥ तत्सहस्त्रगुणंप्रोक्तंप्रबोधिन्यांतुजागरात् ॥ ४८ ॥ स्नानंदानंज-

पोहोमःस्वाध्यायोऽभ्यर्चनंहरेः ॥ तत्सर्वंकोटितुल्यंतुप्रबोधिन्यांतुयत्कृतम् ॥
४९ ॥ जन्मप्रभृतियत्पुण्यंनरेणोपार्जितंभवेत् ॥ वृथाभवतितत्सर्वमकृत्वा
कार्तिकंव्रतम् ॥ ५० ॥ अकृत्वानियमंविष्णोःकार्तिकंयःक्षिपेन्नरः ॥ जन्मा-
र्जितस्यपुण्यस्यफलंनाप्नोतिनारद ॥ ५१ ॥ तस्मात्त्वयाप्रयत्नेनदेवदेवोज-
नार्दनः ॥ उपासनीयोविप्रेंद्रसर्वकामफलप्रदः ॥ ५२ ॥ परान्नंवर्जयेद्यस्तुका-
र्तिकेविष्णुतत्परः ॥ परान्नवर्जनाद्वत्सचांद्रायणफलंलभेत् ॥ ५३ ॥ नतथा
तुष्यतेयज्ञैर्नदानैर्वागजादिभिः ॥ यथाशास्त्रकथालापैःकार्तिकेमधुसूदनः ॥
५४ ॥ येकुर्वंतिकथांविष्णोर्येशृण्वंतिसमाहिताः ॥ श्लोकार्धंश्लोकमेकंवाकार्ति-
केगोशतंफलम् ॥ ५५ ॥ सर्वधर्मान्परित्यज्यकार्तिकेकेशवाग्रतः ॥ शास्त्राव-

धारणंकार्यं श्रोतव्यंचसदामुने ॥ ५६ ॥ श्रेयसांलोभबुद्ध्यावायःकरोतिहरेः
कथाम् ॥ कार्तिकेमुनिशार्दूलकुलानांतारयेच्छतम् ॥५७॥ नित्यंशास्त्रविनोदे-
नकार्तिकंयःक्षिपेन्नरः ॥ निर्दहेत्सर्वपापानियज्ञायुतफलंलभेत् ॥ ५८ ॥ नि-
यमेननरोयस्तुशृणुतेवैष्णवींकथाम् ॥ कार्तिकेतुविशेषेणगोसहस्रफलंलभेत् ॥
५९ ॥ प्रबोधवासरेविष्णोःकुरुतेयोहरेःकथाम् ॥ सप्तद्वीपवतीदानेतत्फलंल-
भतेमुने ॥ ६० ॥ श्रुत्वाविष्णुकथांदिव्यांयेऽर्चयंतिकथाविदम् ॥ स्वशक्त्या
मुनिशार्दूलतेषांलोकाःसनातनाः ॥ ६१ ॥ ब्रह्मणोवचनंश्रुत्वानारदःपुनरब्र-
वीत् ॥ ॥ नारदउवाच ॥ ॥ विधानंब्रूहिमेस्वामिन्नेकादश्याःसुरोत्तम ॥
६२ ॥ चीर्णेनयेनभगवन्यादृशंफलमाप्नुयात् ॥ नारदस्यवचःश्रुत्वाब्रह्मावच-

नमब्रवीत् ॥ ६३ ॥ ब्राह्मेमुहूर्तेचोत्थायह्येकादश्यांद्विजोत्तम ॥ स्नानंचैवप्रक-
र्तव्यंदंतधावनपूर्वकम् ॥ ६४ ॥ नद्यांतडागेकूपेवावाप्यांगेहेतथैवच ॥ केश-
वश्चैवसंपूज्यःकथायाःश्रवणंतथा ॥ ६५ ॥ नियमार्थेमहाभागइमंमंत्रमुदीर-
येत् ॥ एकादश्यांनिराहारःस्थित्वाऽहनिपरेह्यहम् ॥ ६६ ॥ ॥ भोक्ष्यामि
पुंडरीकाक्षशरणंमेभवाच्युत ॥ अमुंमंत्रंसमुच्चार्यदेवदेवस्यचक्रिणः ॥ ६७ ॥
भक्तिभावेनतुष्टात्माह्युपवासंसमर्पयेत् ॥ रात्रौजागरणंकार्यंदेवदेवस्यसन्निधौ ॥
६८ ॥ गीतंनृत्यंचवाद्यंचतथाकृष्णकथांमुने ॥ यःकरोतिसपुण्यात्मात्रैलोक्यो-
परिसंस्थितः ॥ ६९ ॥ बहुपुष्पैर्बहुफलैःकर्पूरागरुकुंकुमैः ॥ हरेःपूजाविधा-
तव्याकार्तिक्यांबोधवासरे ॥ ७० ॥ वित्तशाठ्यंनकर्तव्यंसंप्राप्तेहरिवासरे ॥

यस्मात्पुण्यमसंख्यातंप्राप्यतेमुनिसत्तम ॥ ७१ ॥ फलैर्नानाविधैर्दिव्यैःप्रबो-
धिन्यांतुजागरे ॥ शंखतोयंसमादायह्यर्घोदेयोजनार्दने ॥ ७२ ॥ यत्फलंस-
र्वतीर्थेषुसर्वदानेषुयत्फलम् ॥ तत्फलंकोटिगुणितंदत्वाऽर्घंबोधवासरे ॥ ७३ ॥
अगस्त्यकुसुमैर्देवंपूजयेद्योजनार्दनम् ॥ देवेंद्रोऽपिमुनिश्रेष्ठकरोतिकरसंपुटम्॥
७४ ॥ नतत्करोतिविप्रेंद्रतपसातोषितोहरिः ॥ यत्करोतिहृषीकेशोमुनिपुष्पै-
रलंकृतः ॥ ७५ ॥ बिल्वपत्रैश्चयेकृष्णंकार्तिकेकलिवर्धन ॥ पूजयंतिमहाभ-
क्त्यामुक्तिस्तेषांमयोदिता ॥ ७६ ॥ तुलसीदलपुष्पैश्चपूजयंतिजनार्दनम् ॥
कार्तिकेसकलंवत्सपापंजन्मायुतंदहेत् ॥ ७७ ॥ दृष्टास्पृष्टाऽथवाध्याताकीर्ति-
तानमितास्तुता ॥ रोपितासिंचितानित्यंपूजितातुलसीशुभा ॥ ७८ ॥ नव-

धातुलसीभक्तिंयेकुर्वंतिदिनेदिने ॥ युगकोटिसहस्राणितेवसंतिहरेर्गृहे ॥७९॥ रोपितातुलसीयावत्कुरुतेमूलविस्तरम् ॥ तावद्युगसहस्राणितनोतिसुकृतंमुने ॥ ८०॥ यावच्छाखाप्रशाखाभिर्बीजपुष्पदलैर्मुने ॥ रोपितातुलसीपुंभिर्वर्धतेवसुधातले ॥ ८१ ॥ कुलेतेषांतुयेजातायेभविष्यंतियेगताः ॥ आकल्पयुगसाहस्रंतेषांवासोहरेर्गृहे ॥ ८२ ॥ कदंबकुसुमैर्देवंयेऽर्चयंतिजनार्दनम् ॥ तेषांयमालयंनैवप्रसादाच्चचक्रपाणिनः ॥ ८३ ॥ दृष्ट्वाकदंबकुसुमंप्रीतोभवतिकेशवः ॥ किंपुनःपूजितोविप्रसर्वकामप्रदोहरिः ॥ ८४ ॥ यःपुनःपाटलापुष्पैर्वसंतेगरुडध्वजम् ॥ अर्चयेत्परयाभक्त्यामुक्तिभागीभवेद्धिसः ॥ ८५ ॥ बकुलाशोककुसुमैर्येऽर्चयंतिजगत्पतिम् ॥ विशोकास्तेभविष्यंतियावच्चंद्रदिवाकरौ ॥

८६ ॥ येऽर्चयंतिजगन्नाथंकरवीरैःसितासितैः ॥ चतुर्युगानिविप्रेंद्रप्रीतोभव-
तिकेशवः ॥ ८७ ॥ मंजरींसहकारस्यकेशवोपरियेनराः ॥ यच्छंतितेमहाभा-
गागोकोटिफलभागिनः ॥ ८८॥ दूर्वांकुरैर्हरेर्यस्तुपूजांकालेप्रयच्छति ॥ पूजा-
फलंशतगुणंसम्यगाप्नोतिमानवः ॥ ८९ ॥ शमीपत्रैस्तुयेदेवंपूजयंतिसुखप्रद-
म् ॥ यममार्गोमहाघोरोनिस्तीर्णस्तैस्तुनारद ॥ ९० ॥ वर्षाकालेतुदेवेशंकु-
सुमैश्चंपकोद्भवैः ॥ येऽर्चयंतिनतेमर्त्याःसंसरेयुःपुनर्भवे ॥ ९१ ॥ कुंभीपुष्पंतु
विप्रर्षेयेयच्छंतिजनार्दनेम् ॥ सुवर्णफलमात्रंतेलभतेवैफलंमुने ॥ ९२ ॥
सुवर्णकेतकीपुष्पंयोददातिजनार्दने ॥ कोटिजन्मार्जितंपापंदहतेगरुडध्वजः ॥
९३ ॥ कुंकुमारुणवर्णांचगंधाढ्यांशतपत्रिकम् ॥ योददातिजगन्नाथेश्वेत-

द्वीपालयेवसेत् ॥ ९४ ॥ एवंसंपूज्यरात्रौचकेशवंभुक्तिमुक्तिदम् ॥ प्रातरुत्था-
यचब्रह्मन्गत्वातुसजलांनदीम् ॥ ९५ ॥ तत्रस्नात्वाजपित्वाचकृत्वापूर्वाह्निकीः
क्रियाः ॥ गृहेगत्वाचसंपूज्यःकेशवोविधिवन्नरैः ॥ ९६ ॥ व्रतस्यपूरणार्थाय
ब्राह्मणान्भोजयेत्सुधीः ॥ क्षमापयेच्चशिरसाभक्तियुक्तेनचेतसा ॥ ९७ ॥
गुरुपूजाततःकार्याभोजनाच्छादनादिभिः ॥ दक्षिणागौश्चदातव्यातुष्ट्यर्थंच-
क्रपाणिनः ॥ ९८ ॥ भूयसीचैवदातव्याब्राह्मणेभ्यःप्रयत्नतः ॥ नियमश्चैव
संत्याज्योब्राह्मणाग्रेप्रयत्नतः ॥ ९९ ॥ कथयित्वाद्विजेभ्यस्तुदद्याच्छ-
क्तयाचदक्षिणाम् ॥ नक्तभोजीनरोराजन्ब्राह्मणान्भोजयेच्छुभान् ॥ १०० ॥
अयाचितेवलीवर्दंसहिरण्यंप्रदापयेत् ॥ अमांसाशीनरोयस्तुप्रददेद्गांसद-

क्षिणाम् ॥ १ ॥ धात्रीस्त्रायीनरोदद्योद्दधिमाक्षिकमेवच ॥ फलानां
नियमेराजन्फलदानंसमाचरेत् ॥ २ ॥ तैलस्थानेघृतंदेयंघृतस्थानेपयःस्मृ-
तम् ॥ धान्यानांनियमेराजन्दीयंतेशालितंडुलाः ॥ ३ ॥ दद्याद्भूशयनेश-
य्यांसतुलांसपरिच्छदाम् ॥ पत्रभोजीनरोराजन्भाजनंघृतसंयुतम् ॥ ४ ॥
मौनेघंटांतिलांश्चैवसहिरण्यंप्रदापयेत् ॥ दंपत्योर्भोजनंदेयंनिःस्नेहंसर्पिसाक्त-
तम् ॥ ५ ॥ धारणेचस्वकेशानामादर्शंदापयेद्बुधः ॥ उपानहौप्रदातव्येउपा-
नत्परिवर्जने ॥ ६ ॥ लवणस्यचसंत्यागेशर्करांचप्रदापयेत् ॥ नित्यंदीप-
प्रदोयस्तुविष्णोर्वाविबुधालये ॥ ७ ॥ सदीपंसघृतंताम्रंकांचनंवादशायुतम्॥
प्रदद्याद्विष्णुभक्तायसंपूर्णव्रतहेतवे ॥ ८ ॥ एकांतरोपवासेतुकुंभानष्टौप्रदाप-

येत् ॥ सवस्त्रान्कांचनोपेतान्सर्वान्सालंकृतान्शुभान् ॥ ९ ॥ सर्वेषामप्यला-
भेतुयथोक्तकरणंविना ॥ द्विजवाक्यंस्मृतंराजन्संपूर्णव्रतसिद्धिदम् ॥ १० ॥
नत्वाविसर्जयेद्विप्रान्ततोभुंजीतचस्वयम् ॥ यत्त्यक्तंचतुरोमासान्समाप्तिंतस्य
चाचरेत् ॥ ११ ॥ एवंयआचरेत्पार्थसोऽनंतफलमाप्नुयात् ॥ अवसानेतुरा-
जेंद्रवासुदेवपुरंव्रजेत् ॥ १२ ॥ यश्चाविघ्नंसमाप्यैवंचातुर्मास्यव्रतंनृप ॥ स
भवेत्कृतकृत्यस्तुनपुनर्मानुषोभवेत् ॥ १३ ॥ एतत्कृत्वामहीपालपरिपूर्णव्रतं
भवेत् ॥ व्रतवैकल्यमासाद्यह्यंधःकुष्ठीप्रजायते ॥ १४ ॥ एतत्तेसर्वमाख्यातं
यत्पृष्टोऽहमिहत्वया ॥ पठनाच्छ्रवणाद्वापिलभेद्गोदानजंफलम् ॥ ११५ ॥ ॥
॥ इतिश्रीस्कंदपुराणेकार्तिकशुक्लैकादशीप्रबोधिनीमाहात्म्यंसमाप्तम् ॥ ७ ॥

॥ अथाधिकशुक्लैकादशीकथा ॥ ॥ युधिष्ठिरउवाच ॥ ॥ मलिम्लुचस्य मासस्यकावैएकादशीभवेत् ॥ किंनामकोविधिस्तस्याःकथयस्वजनार्दन ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ मलमासस्ययापुण्याप्रोक्तानाम्नाच पद्मिनी ॥ सोपोषिताप्रयत्नेनपद्मनाभपुरंनयेत् ॥ २ ॥ मलमासेम- हापुण्याकीर्तिताकल्मषापहा ॥ तस्याःफलंकथयितुंनशक्तश्चतुराननः ॥ ॥ ३ ॥ नारदायपुराप्रोक्तंविधिनाव्रतमुत्तमम् ॥ पद्मिन्याः पापराशि- घ्नंभुक्तिमुक्तिफलप्रदम् ॥ ४ ॥ श्रुत्वावाक्यंमुरारेस्तुप्रोवाचातिमुदा- न्वितः ॥ युधिष्ठिरोजगन्नाथंविधिंपप्रच्छधर्मवित् ॥ ५ ॥ श्रुत्वाराज्ञस्तुवच- नंप्रीत्युत्फुल्लांबुजेक्षणः ॥ शृणुराजन्प्रवक्ष्यामिमुनीनामप्यगोचरम् ॥ ६ ॥

दशमीदिवसेप्राप्तेव्रतारंभोविधीयते ॥ कांस्यंमांसंमसूराश्चचणकाःकोद्रवास्त-
था ॥ ७ ॥ शाकंमधुपरान्नंचदशम्यांदशवर्जयेत् ॥ हविष्यान्नंचभुंजीत
अक्षारलवणंतथा ॥ ८ ॥ भूमिशायीब्रह्मचारीभवेच्चदशमीदिने ॥ एकादशी-
दिनेप्राप्तेप्रातरुत्थायसादरम् ॥ ९ ॥ विधायचमलोत्सर्गंनकुर्याद्दंतधावनम् ॥
कृत्वाद्वादशगंडूषान्शुचिर्भूत्वासमाहितः ॥ १० ॥ सूर्योदयेशुभेतीर्थेस्नानार्थं
प्रव्रजेत्सुधीः ॥ गोमयंमृत्तिकांगृह्यतिलान्दर्भान्शुचिस्तथा ॥ ११ ॥ चूर्णै-
रामलकीभूतैर्विधिनास्नानमाचरेत् ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥
१२ ॥ मृत्तिकेब्रह्मदत्तासिकाश्यपेनाभिमंत्रिता ॥ त्वंमेकुरुपवित्रांगंलग्नानेत्रे
शिरोरुहे ॥ १३ ॥ हरिपूजनयोग्यंमांमृत्तिकेकुरुतेनमः ॥ सर्वौषधिसमुत्पन्नं

गवोदरमधिष्ठितम् ॥ १४ ॥ पवित्रकरणंभूमेर्मांपावयतुगोमयम् ॥ ब्रह्मष्ठी-
वनसंभूताधात्रीभुवनपावनी ॥ १५ ॥ संस्पृष्टापावयांगंमेनिर्मलंकुरुतेनमः ॥
देवदेवजगन्नाथशंखचक्रगदाधर ॥ १६ ॥ देहिविष्णोममानुज्ञांतवतीर्था-
वगाहने ॥ वारुणांश्चजपेन्मंत्रान्स्नानंकुर्याद्विधानतः ॥ १७ ॥ गंगादितीर्थं
संस्मृत्ययत्रकुत्रजलाशये ॥ पश्चात्संमार्जयेद्गात्रंविधिनानृपसत्तम ॥ १८ ॥
मुखेपृष्ठेचहृदयेबाह्वोःशिरसिचाप्यधः ॥ परिधायसुखंवासःशुक्लंशुचिह्यखंडि-
तम् ॥ १९ ॥ ततःकुर्याद्धरेःपूजांमहापापंविनश्यति ॥ संध्यामुपास्यविधिना
तर्पयित्वापितॄन्सुरान् ॥ २० ॥ हरेर्मंदिरमागम्यपूजयेत्कमलापतिम् ॥
स्वर्णमाषंकृतंदेवंराधिकासहितंहरिम् ॥ पार्वत्यासहितंदेवंपूजयेद्विधिपूर्वकम् ॥

२१ ॥ कुंभोपरिन्यसेद्देवंताम्रपात्रेऽथमृन्मये ॥ दिव्यवस्त्रसमायुक्तेदिव्यगंधानुवासिते ॥ २२ ॥ तस्योपरिन्यसेत्पात्रंताम्रंरौप्यंहिरण्मयम् ॥ तस्मिन् संस्थापयेद्देवंविधिनापूजयेत्ततः ॥ २३ ॥ संस्थाप्यसलिलैःश्रेष्ठैर्गंधधूपाधिवासितैः ॥ चंदनागरुकर्पूरैःपूजयेद्देवमीश्वरम् ॥ २४ ॥ नानाकुसुमकस्तूरीकुंकुमेनसितांबुजैः ॥ तत्कालजातैःकुसुमैःपूजयेत्परमेश्वरम् ॥ २५ ॥ नैवेद्यैर्विविधैःशक्त्यातथानीराजनादिभिः ॥ धूपैर्दीपैःसकर्पूरैःपूजयेत्केशवंशिवम् ॥ २६॥ नृत्यंगीतंतदग्रेतुकुर्याद्भक्तिपुरःसरम् ॥ नालपेत्पतितान्पापान्तस्मिन्नहनिनस्पृशेत् ॥ २७ ॥ नानृतंहिवदेद्वाक्यंसत्यपूतंवचोवदेत् ॥ रजस्वलांनस्पृशेतननिंदेद्ब्राह्मणंगुरुम् ॥ २८ ॥ पुराणंपुरतोविष्णोःशृणुयात्सहवैष्णवैः ॥

निर्जलासाप्रकर्तव्यायाचशुक्लेमलिम्लुचे ॥ २९ ॥ जलपानेनवाकुर्याद्दुग्धा-
हारेणनान्यथा ॥ रात्रौजागरणंकुर्याद्गीतवादित्रसंयुतम् ॥ ३० ॥ प्रथमेप्रहरे
पूजानारिकेलार्घ्यमुत्तमम् ॥ द्वितीयेश्रीफलैश्चैवतृतीयेबीजपूरकैः ॥ ३१ ॥
चतुर्थेपूजयेत्पूगैर्नारिंगैश्चविशेषतः ॥ प्रथमेप्रहरेपुण्यमग्निष्टोमस्यजायते ॥
३२ ॥ द्वितीयेवाजपेयस्यतृतीयेहयमेधजम् ॥ चतुर्थेराजसूयस्यजाग्रतोजा-
यतेफलम् ॥ ३३ ॥ नातःपरतरंपुण्यंनातःपरतरामखाः ॥ नातःपरतराविद्या
नातःपरंतरंतपः ॥ ३४ ॥ पृथिव्यांयानितीर्थानिक्षेत्राण्यायतनानिच ॥ त-
त्स्नातानिचदृष्टानियेनाकारिहरेर्व्रतम् ॥ ३५ ॥ एवंजागरणंकुर्याद्यावत्सूर्यो-
दयोभवेत् ॥ सूर्योदयेशुभेतीर्थेगत्वास्नानंसमाचरेत् ॥ ३६ ॥ स्नात्वैवागत्य

भावेनपूजयेद्देवमीश्वरम् ॥ पूर्वोदितेनविधिनाभोजयेद्ब्राह्मणान्शुभान् ॥ ३७ ॥
कुंभादिकंचयत्सर्वंप्रतिमांकेशवस्यच ॥ पूजयित्वाविधानेनब्राह्मणायसमर्पये-
त् ॥ ३८ ॥ एवंविधंव्रतंयोवैकुरुतेभुविमानवः ॥ सफलंजायतेतस्यव्रतंमुक्ति-
फलप्रदम् ॥ ३९ ॥ एतत्तेसर्वमाख्यातंयत्पृष्टोऽहंत्वयाऽनघ ॥ मलिम्लुचस्य
मासस्यशुक्लायाविधिमुत्तमम् ॥ ४० ॥ व्रतानितेनचीर्णानिसर्वाणिनृपनंदन ॥
पद्मिन्याःप्रीतियुक्तोयःकुरुतेव्रतमुत्तमम् ॥ ४१ ॥ कृष्णायामलमासस्यविधि-
स्तस्यापितादृशः ॥ परमासातुविज्ञेयासर्वपापक्षयंकरी ॥ ४२ ॥ अत्रतेकथ-
यिष्यामिकथामेकांमनोरमाम् ॥ नारदायपुलस्त्येनविस्तरेणानिवेदिताम् ॥
४३ ॥ कार्तवीर्येणकारायांनिक्षिप्तंवीक्ष्यरावणम् ॥ विमोचितःपुलस्त्येनयाच-

यिवामहीपतीम् ॥ ४४ ॥ तदाश्चर्यंतदाश्रुत्वानारदोदिव्यदर्शनः ॥ पप्रच्छ
चयथाभक्त्या पुलस्त्यंमुनिपुंगवम् ॥ ॥ ४५ ॥ दशाननेनाविजिताःसर्वेदेवाः
सवासवाः ॥ कार्तवीर्येणविजितःकथंरणविशारदः ॥ ४६ ॥ नारदस्यवचः
श्रुत्वापुलस्त्योमुनिमब्रवीत् ॥ शृणुवत्सप्रवक्ष्यामिकार्तवीर्यसमुद्भवम् ॥४७॥
पुरात्रेतायुगेराजन्माहिष्मत्यांबृहत्तरः ॥ हैहयानांकुलेजातःकृतवीर्योमहीप-
तिः ॥ ४८ ॥ सहस्रंप्रमदास्तस्यनृपस्यप्राणवल्लभाः ॥ नतासांतनयंकंचिल्लेभे
राज्यधुरंधरम् ॥ ४९ ॥ यजन्देवान्पितॄन्सिद्धान्प्रचिकित्सान्बृहत्तरान् ॥
तेषांवाक्याद्व्रतंकुर्वन्नलब्धस्तनयस्तदा ॥ ५० ॥ सुतंविनातदाराज्यंनसुखाय
महीपतेः॥क्षुधितस्ययथाभोगानभवंतिसुखप्रदाः ॥५१॥विचार्यचित्तेनृपतिस्त-

पस्तप्तुंमनोदधे ॥ तपसैवसदासिद्धिर्जायतेमनसेप्सिता ॥ ५२ ॥ इत्युक्त्वा
सहभार्यश्चचीरवासाजटाधरः ॥ तपस्तप्तुंगृहंन्यस्यसविचार्यसुमंत्रिणे ॥५३॥
निर्गतंनृपतिंवीक्ष्यपद्मिनीप्रमदोत्तमा॥ हरिश्चंद्रस्यतनयाइक्ष्वाकुकुलसंभवा ॥
५४ ॥ पतिव्रताप्रियंदृष्ट्वातपस्तप्तुंकृतोद्यमम् ॥ भूषणानिपरित्यज्यचीरमेकं
समाश्रयत् ॥ ५५ ॥ जगामपतिनासार्द्धंपर्वतेगंधमादने ॥ गत्वातत्रतपस्ते-
पेवर्षाणामयुतंनृपः ॥ ५६ ॥ नलेभेतनयंराज्येध्यायन्देवंगदाधरम् ॥ अ-
स्थिस्नायुमयंकांतंदृष्ट्वासाप्रमदोत्तमा ॥ ५७ ॥ अनुसूयांमहासाध्वींप्रपच्छ
विनयान्विता ॥ भर्तुःप्रतपतःसाध्विवर्षाणामयुतंगतम् ॥ ५८ ॥ तथापिन
प्रसन्नोऽभूत्केशवःकष्टनाशनः॥ व्रतंममम्महाभागेकथयस्वयथातथम् ॥ ५९॥

येनप्रसन्नोभगवान्ममभक्त्याप्रजायते ॥ येनमेजायतेपुत्रश्चक्रवर्त्तीबृहत्तरः ॥
॥ ६० ॥ श्रुत्वातस्यास्तुवचनंपतिव्रतपरायणा ॥ यंप्रव्रजंतंनृपतिंस्वयंप्रव्रा-
जदीक्षितम् ॥ ६१ ॥ तदाप्रोवाचसंहृष्टापद्मिनींपद्मलोचनाम् ॥ स्नात्वाम-
लिम्लुचेसुभ्रुमासेद्वादशसंमतम् ॥ ६२ ॥ त्रिंशद्दिनैश्चभवतिमासःपूर्णःशुभा-
नने ॥ तन्मध्येद्वादशीयुग्मंपद्मिनीपरमातथा ॥ ६३ ॥ उपोष्यतत्प्रकर्तव्यं
विधिनाजागरैःसमम् ॥ शीघ्रंप्रसन्नोभगवान्भविष्यतिसुतप्रदः ॥ ६४ ॥ इ-
त्युक्त्वाकथयत्सर्वंमयापूर्वोदितंनृप ॥ विधिंव्रतस्यविधिवत्प्रसन्नाकर्दमांगजा ॥
॥ ६५ ॥ श्रुत्वाव्रतविधिंसर्वंयथोक्तमनुसूयया ॥ चक्रेचार्वंगीतत्सर्वंपुत्रप्राप्ति-
मभीप्सती ॥ ६६ ॥ एकादश्यांनिराहारासदाजाताचनिर्जला ॥ जागरेण

युतारात्रौगीतनृत्यसमन्विता ॥ ६७ ॥ पूर्णेव्रतेचवैशीघ्रंप्रसन्नःकेशवःस्वयम् ॥
बभाषेगरुडारूढोवरंवरयशोभने ॥ ६८ ॥ श्रुत्वावाक्यंजगद्धातुःस्तुत्वाप्रीत्या
शुचिस्मिता ॥ ययाचेऽद्यवरंब्रूहिममभर्तुर्बृहत्तरम् ॥ ६९ ॥ पद्मिन्यास्तद्वचः
श्रुत्वाकृष्णःप्रीतःप्रियंवदाम् ॥ त्वयाऽहंतोषितोभद्रेप्रत्युवाचजनार्दनः ॥७०॥
मलिम्लुचश्चमासोऽसौनान्योमेप्रीतिदायकः ॥ तन्मध्यैकादशीरम्याममप्रीति-
विवर्धना ॥ ७१ ॥ सात्वयोपोषितासुभ्रुयथोक्तविधिनाशुभे ॥ तेनत्वयाप्रस-
न्नोऽहंकृतोऽस्मिसुभगानने ॥ ७२ ॥ तवभर्तुःप्रदास्यामिवरंयन्मनसेप्सितम् ॥
इत्युक्त्वानृपतिंप्राहविष्णुर्विश्वार्तिनाशनः ॥ ७३ ॥ वरंवरयराजेंद्रयत्तेमनसि
कांक्षितम् ॥ संतोषितोऽहंप्रिययातवसिद्धिचिकीर्षया ॥ ७४ ॥ श्रुत्वातद्वचनं

विष्णोःप्रसन्नोनृपसत्तमः ॥ वव्रेसुतंमहाबाहुंसर्वलोकनमस्कृतम् ॥ ७५ ॥
नदेवैर्मानुषैर्नागैर्दैत्यदानवराक्षसैः ॥ जेतुंशक्योजगन्नाथविनात्वांमधुसूदन ॥
७६॥ इत्युक्तोबाढमित्युक्त्वातत्रैवांतरधीयत ॥ नृपोऽपिसुप्रसन्नात्माहृष्टःपुष्टः
प्रियायुतः ॥ ७७ ॥ समायात्स्वपुरंरम्यंनरनारीमनोरमम् ॥ सपद्मिन्यांसुतं
लेभेकार्तवीर्यंमहाबलम् ॥ ७८ ॥ नतेनसदृशःकश्चित्त्रिषुलोकेषुमानवः ॥ त-
स्मात्पराजितःसंख्येरावणोदशकंधरः ॥ ७९ ॥ नतंजेतुंसमर्थोऽस्तित्रिषुलोके-
षुकश्चन ॥ विनानारायणंदेवंचक्रपाणिंगदाधरम् ॥८०॥ नत्वयाविस्मयःकार्यो
रावणस्यपराजये ॥ मलिम्लुचप्रसादेनपद्मिन्याश्चाप्युपोषणात् ॥८१॥ दत्तो
देवाधिदेवेनकार्तवीर्योमहाबलः॥इत्युक्त्वाप्रययौविप्रःप्रसन्नेनांतरात्मना॥८२॥

॥श्रीकृष्णउवाच॥ ॥ एतत्तेसर्वमाख्यातंयत्पृष्टोऽहंतवानघ ॥ मलिम्लुचस्य
मासस्यशुक्लायाःसंभवोमहान्॥८३॥येकरिष्यंतिमनुजास्तेयास्यंतिहरेःपदम्॥
त्वमेवंकुरुराजेंद्रयदिचेष्टमभीप्ससि॥८४॥ केशवस्यवचःश्रुत्वाधर्मराजोऽतिह-
र्षितः॥ चक्रेव्रतंविधानेनबंधुभिःपरिवारितः ॥८५॥ ॥ सूतउवाच ॥ ॥एतत्ते
सर्वमाख्यातंयत्पृष्टोऽहंपुराद्विज ॥ पुण्यंपवित्रंपरमंकिंभूयःश्रोतुमिच्छसि ॥
॥ ८६ ॥ एवंवि[illegible]येऽपिव्रतंमनुष्याभक्त्याकरिष्यंतिमलिम्लुचस्य ॥ उपोषि-
तायैस्तुसुखप्रदात्रीयाशुक्लपक्षेभुवितेपिधन्याः ॥ ८७ ॥ श्रोष्यंतियेतस्यवि-
धिंसमग्रंतेप्यंशभाजामनुजाःप्रशस्ताः ॥ येवैपठिष्यंतिकथांसमग्रांतेवैगमि-
ष्यंतिहरेर्निवासम् ॥ ८८ ॥ ॥ इत्यधिकशुक्लैकादशीकथासमाप्ता ॥ ॥

॥ अथाधिककृष्णैकादशीकथा ॥ ॥ युधिष्ठिरउवाच ॥ ॥ मलिम्लुचस्य मासस्यकृष्णाकाकथ्यतेविभो ॥ किंनामकोविधितस्याःकथयस्वजगत्पते ॥१॥ ॥ श्रीकृष्णउवाच ॥ परमेतिसमाख्यातापवित्रापापहारका ॥ भुक्तिमुक्तिप्रदानृणांस्त्रीणांचापियुधिष्ठिर ॥ २ ॥ पूर्वोक्तविधिनाकार्याशुक्लायाःसदृशेनवै ॥ पूजयेत्परयाभक्त्यानाम्नादेवंनरोत्तमम् ॥ ३ ॥ अत्रतेकथयिष्यामिकथामेतां मनोरमाम् ॥ कांपिल्यनगरेजातांमुनीनामग्रतःश्रुताम् ॥ ४ ॥ आसीद्द्विजवरःकश्चित्सुमेधानामधार्मिकः॥ तस्यपत्नीपवित्राख्यापातिव्रत्यपरायणा ॥५॥ कर्मणाकेनचिद्विप्रोधनधान्यविवर्जितः ॥ नक्वापिलभतेभिक्षांयाचन्नापिनरान्बहून् ॥ ६ ॥ नभोज्यंलभतेतादृक्नवस्त्रंनैवमंडनम् ॥ रूपयौवनमाधुर्यं

नारीशुश्रूषतेपतिम् ॥ ७ ॥ अतिथिंपूजयेत्क्वापितदासाक्षुधितागृहे ॥ तिष्ठ-
त्येवविशालाक्षीमम्लानमुखपंकजाम् ॥ ८ ॥ विलोक्यभार्यांसुदतींकर्शंतीं
स्वकलेवरम् ॥ नभर्तारंक्वचिच्चैवनास्त्यन्नमितिभाषते ॥ ९ ॥ विचार्यब्रा-
ह्मणश्चित्तेभार्यायाःप्रेमबंधनम् ॥ निंदन्भाग्यंस्वकंविप्रःप्रोचेवाक्यंप्रियंवदा-
म् ॥ १० ॥ कां [illegible] करोमिकिंकार्येनमयालभ्यतेधनम् ॥ याचयामिनरान्भ-
व्यान्नयच्छंतिच [illegible] धनम् ॥ ११ ॥ किंकरोमिक्कगच्छामित्वंमेकथयशोभने ॥
विनाधनेनसुश्रोणिगृहे [illegible] र्येनासिध्यति ॥ १२ ॥ देह्याज्ञांपरदेशायगच्छामि
धनलब्धये ॥ तस्मिन्देशेचयद्भाव्यंभाग्यंतत्रैवलभ्यते ॥ १३ ॥ उद्यमेन
विनासिद्धिःकर्मणांनोपलभ्यते ॥ तस्माद्बुधाःप्रशंसंतिसर्वथैवशुभोद्यमम् ॥

१४ ॥ श्रुत्वाकांतस्यवचनंसाश्रुनेत्राविचक्षणा ॥ प्रोवाचप्रांजलिर्भूत्वाविन-
यानतकंधरा ॥ १५ ॥ त्वत्तोनास्तिसुविज्ञातात्वयाऽऽज्ञप्ताब्रवीम्यहम् ॥ हितै-
षिणोनराब्रूयुःशश्वत्साध्वह्यसाध्वपि ॥ १६ ॥ पूर्वंदत्तंहिलभ्येतयत्रकुत्रमही-
तले ॥ विनादानंनलभ्येतमेरौकनकपर्वते ॥ १७ ॥ पूर्वंदत्ताहियाविद्यापूर्वं-
दत्तंहियद्धनम् ॥ पूर्वंदत्ताहियाभूमिरिहजन्मनिलभ्यते ॥ १८ ॥ यद्धात्रालि-
खितंभालेतत्तत्रैवहिलभ्यते ॥ विनादत्तेनकिंक्वापिलभ्यतेनैवकिंचन ॥ १९ ॥
पूर्वजन्मनिविप्रेंद्रनमयानत्वयाक्वचित् ॥ सत्पात्राणांकरेदत्तंस्वल्पंभूयेपियद्ध-
नम् ॥ २० ॥ इहदेशेपरेवापिदत्तंसर्वत्रलभ्यते ॥ अन्नमात्रंतुविश्वेशोविनाद-
त्तेनयच्छति ॥ २१ ॥ तस्माद्त्रैवविप्राग्र्यस्थातव्यंभवतामया ॥ भवद्भि-

नानतिष्ठामिक्षणमात्रंमहामुने ॥ २२ ॥ नमातानपिताभ्रातानश्वश्रूःश्वशु-
रोजनः ॥ नसत्कुर्वंतितांकेपिस्वजनाश्चपरेकुतः ॥ २३ ॥ भर्तृहीनांविनिंदं-
तिदुर्भगेतिवदंतिताम् ॥ तस्मादत्रस्थिरोभूत्वाविहरस्वयथासुखम् ॥ २४ ॥
भवतोभाग्ययोगेनप्राप्तिश्चात्रभविष्यति ॥ श्रुत्वातस्यास्तुवचनंस्थितस्तत्र
विचक्षणः ॥ २५ ॥ तावत्तत्रसमायातःकौंडिन्योमुनिसत्तमः ॥ दृष्ट्वासमागतं
हृष्टःसुमेधाद्विजसत्तमः ॥ २६ ॥ सभार्यःसहसोत्थायननामशिरसाऽसकृत् ॥
धन्योऽस्म्यनुगृहीतोऽस्मिसफलंजीवितंमम ॥ २७ ॥ यद्दृष्टोऽसिमहद्भाग्या-
दित्युवाचमुनीश्वरम् ॥ दत्वासुविष्टरंतस्मैपूजयामासतंद्विजम् ॥ २८ ॥ भो-
जयित्वाविधानेनपप्रच्छप्रमदोत्तमा ॥ विद्वन्केनप्रकारेणदारिद्र्यस्यक्षयोभवे-

त् ॥ २९ ॥ विनादत्तंकथंलभ्येद्धनंविद्यांकुटुंबिनीम् ॥ मांमेभर्त्तापरित्यज्यगं-
तुकामोऽद्यवर्तते ॥ ३० ॥ अन्यदेशपराँल्लोकान्याचितुंपरपत्तने ॥ रक्षितो
ऽस्तिमयाविद्वन्हेतुवाक्यैर्महत्तरैः ॥ ३१ ॥ नादत्तंलभ्यतेकिंचिदित्युक्त्वास
निवारितः ॥ मद्भाग्यान्मुनींद्राद्यत्वमत्रैवसमागतः ॥ ३२ ॥ त्वत्प्रसादाद्द-
रिद्रंमेशीघ्रंनश्यत्यसंशयम् ॥ केनोपायेनविप्रेंद्रदरिद्रंनश्यतिध्रुवम् ॥ ३३ ॥
कथयस्वकृपासिंधोव्रतंतीर्थंतपादिकम् ॥ श्रुत्वातस्याःसुशीलायाभाषितंमुनि-
पुंगवः ॥ ३४ ॥ प्रोवाचप्रवरंचित्तेविचार्यव्रतमुत्तमम् ॥ सर्वपापौघशमनंदुः-
खदारिद्र्यनाशनम् ॥ ३५ ॥ परमानामविख्याताविष्णोस्तिथिरनुत्तमा ॥
मलिम्लुचेतुयाकृष्णाभुक्तिमुक्तिफलप्रदा ॥ ३६ ॥ तस्याउपोषणंकृत्वाधनधा-

न्ययुतोभवेत् ॥ विधिनाजागरैःसाकंगीतवादित्रसंयुतम् ॥ ३७ ॥ धनदेनपु-
राचीर्णंव्रतमेतत्सुशोभनम् ॥ तदाहृष्टेनरुद्रेणधनानामधिपःकृतः ॥ ३८ ॥
हरिश्चंद्रेणचकृतंपुराक्रीतसुतेनवै ॥ पुनःप्राप्ताप्रियातेनराज्यंनिहतकंटकम् ॥
॥ ३९ ॥ तस्मात्कुरुविशालाक्षिव्रतमेतत्सुशोभनम् ॥ विधिनाविधियुक्तेन
समंजागरणेनच ॥ ४० ॥ इत्युक्त्वातद्विधिंसर्वंकथयामासपांडवः ॥ प्रीत्याप-
रमसंतुष्टस्ततोभ[illegible]त्याप्रसादतः ॥ ४१ ॥ पुनःप्रोवाचतंविप्रंपंचरात्रिव्रतंशुभ-
म् ॥ यस्यानुष्ठानमात्रे[illegible]भुक्तिमुक्तिश्चप्राप्यते ॥ ४२ ॥ परमादिवसेप्रातःकृ-
त्वापौर्वाह्णिकंविधिम् ॥ कुर्यात्सुनियमान्शक्त्यापंचरात्रिव्रतादरात् ॥ ४३ ॥
प्रातःस्नात्वानिराहारोयस्तिष्ठेद्दिनपंचकम् ॥ सगच्छेद्वैष्णवंस्थानंपितृमातृ-

प्रियासमम् ॥ ४४ ॥ एकाशनस्तुयोभूयाद्दिनानांपंचकंनरः ॥ सर्वपापविनि-
र्मुक्तःस्वर्गलोकेमहीयते ॥ ४५ ॥ स्नात्वायोभोजयेद्विप्रंदिनानांपंचकंनरः ॥
भोजितंतेनविधिनासदेवासुरमानुषम् ॥ ४६ ॥ पूर्णकुंभंसतोयेनयोददाति
द्विजातये ॥ दत्तंनैवसकलंब्रह्मांडंसचराचरम् ॥ ४७ ॥ तिलपात्रंतुयोद-
द्यात्स्नात्वापंचादिनंनरः ॥ सभुक्त्वाविपुलान्भोगान्सूर्यलोकेमहीयते ॥ ४८ ॥
ब्रह्मचर्येणयास्तिष्ठेद्दिनानांपंचकंनरः ॥ सस्वर्गेभुंजतेभोगान्स्वर्वैरूयाभिःसमं
मुदा ॥ ४९ ॥ एवंविधंव्रतंसाध्विकुरुत्वंपतिनाशुभे ॥ धनधान्ययुताभूत्वा
स्वर्गयास्यसिसुव्रते ॥ ५० ॥ इत्युक्त्वासाव्रतंचक्रेकौंडिन्येनयथोदितम् ॥
भर्त्रासमंभावयुतास्नात्वामासिमलिम्लुचे ॥ ५१ ॥ पंचरात्रव्रतेपूर्णेपरायाः

प्रियसंयुता ॥ साऽपश्यद्राजभवनादायांतंनृपनंदनम् ॥ ५२ ॥ दत्वानवीनं
भवनंभव्यवस्तुसमन्वितम् ॥ वासयामासविधिनाविधिनाप्रेरितःस्वयम् ॥
॥ ५३ ॥ दत्वाग्रामंवृत्तिकरंब्राह्मणायसुमेधसे ॥ प्रसन्नस्तपसाराजातंस्तुत्वा
स्वगृहंययौ ॥ ५४ ॥ मलिम्लुचस्यमासस्यपरायाःपरमादरात् ॥ कृष्णाह्यु-
पोषणात्सद्यःपंच[illegible]त्रव्रतेनच ॥ ५५ ॥ सर्वपापविनिर्मुक्तःसर्वसौख्यसमन्वि-
तः ॥ भुक्त्वाभो[illegible]ान्प्रियासार्धमंतेविष्णुपुरंययौ ॥ ५६ ॥ येकरिष्यंतिमनु-
जाःपरायाव्रतमु[illegible]मम् [illegible] पंचरात्रभवंपुण्यंभयावक्तुंनशक्यते ॥ ५७ ॥ पुष्क-
राद्यानितीर्थानिगंगाद्याःसरितस्तथा ॥ धेनुमुख्यानिदानानितेनचीर्णानिस-
र्वथा ॥ ५८ ॥ गयाश्राद्धंकृतंतेनापितरःपरितोषिताः ॥ व्रतानितेनचीर्णानि

व्रतखंडोदितानिवै ॥ ५९ ॥ द्विपदांब्राह्मणःश्रेष्ठोगौर्वरिष्ठाचतुष्पदाम् ॥
देवानांवासवश्रेष्ठस्तथाप्सोमलिम्लुचः ॥ ६० ॥ मलिम्लुचेपंचरात्रिःपश्चा-
त्पापापहारिणी ॥ पंचरात्रेचपरमापद्मिनीपापशोषणी ॥ ६१ ॥ साध्यशक्तैः
प्रकर्तव्यायथाशक्त्याविचक्षणैः ॥ मानुषंजनुरासाद्यनस्नातोयैर्मलिम्लुचः ॥
॥ ६२ ॥ तेजन्मघातिनोनूनंनोपोष्याहरिवासरे ॥ चतुरशीतिलक्षाणिभ्रमं
तेयोनिसंकटे ॥ ६३ ॥ प्राप्यतेमानुषंजन्मदुर्लभंपुण्यसंचयैः ॥ तस्मात्कार्यंप्र-
यत्नेनपरमायाव्रतंशुभम् ॥ ६४ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ एतत्तेसर्व-
माख्यातंयत्पृष्टोऽहंत्वयाऽनघ ॥ मलिम्लुचस्यमासस्यपरमायाःसमुद्भवम् ॥
॥ ६५ ॥ तत्सर्वंतेसमाख्यातंकुरुष्वावहितोनृप ॥ ६६ ॥ श्रुत्वैतद्यदुपतिनो

दितंमाहात्म्यंतच्चचक्रेव्रतमनुजैःप्रियासमेतः ॥ भुक्त्वाऽसौदिविभुविदुर्लभांश्च भोगान्नीतोऽसौसुरवरमंदिरंसुहृष्टः ॥ ६७ ॥ येऽप्येवंभुविमनुजामलिम्लुचस्यसुस्नाताःशुभविधिनासमाचरंति ॥ तेभुक्त्वादिविविभवंसुरेंद्रतुल्यंगच्छेयुस्त्रिभुवनवंदितस्यगेहम् ॥ ६८ ॥ ॥ इतिश्रीअधिककृष्णैकादशीपरमामाहात्म्यंसमाप्तम् ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ श्रीमज्जगदीश्वरार्पणमस्तु ॥ ॥ शुभमस्तु ॥ ॥ ॥ ॥ ॥ ७ ॥

हें पुस्तक पुणें पेंठ शनिवार मेहुणपुरा येथें
रावजी श्रीधर गोंधळेकर यांणीं आपले “ जगद्धितेच्छु ”
छापखान्यांत छापून प्रसिद्ध केलें.

मित्ति वैशाख शुद्ध १ शके १८१२. तारीख २० माहे एप्रिल सन १८९० इ०

आवृत्ति १ ली.

